दानस्य कर्त्रादिभावमापन्ना वज्रजङ्घमहाराजप्रभृतयः । किं तत्फलं । कस्मात् मुनिदानतः । तत्कस्य चेतसि चमत्कारं न करोतीति समुदायेनार्थकथनं । इयं तु प्रत्येकवाक्यपरिसमाप्तिरिदानीं प्रदर्श्यते । यत्किल वज्रजङ्घनृपतिरुत्पलखेटनगराधिपतिर्वज्रजङ्घो नाम नृपतिरासाद प्राप्तः । किं तत्फलं । कस्मान्मुनिदानतः । किंविशिष्टः सन् कर्ता दानस्य स्वातंत्र्येण विधाता । यच्च आससाद । काऽसौ सती पतिव्रता । किंनाम्नी श्रीमती पुण्डरीकिणीनाथस्य वज्रदन्तचक्रिणः पुत्री वज्रजङ्घनृपतेः पत्नी । किं तत् फलं । कस्मात् मुनिदानतः । किंविशिष्टा सती कारयित्री स्वभर्तुर्दानं कुर्वतः प्रयोजयित्री । अपिः समुच्चये पूर्वत्रोत्तरत्र च चशब्दार्थे योज्यः । यच्च आसेदुः प्राप्ताः के ते मतिवरव्याघ्रादयो मुनिदानतः फलं । मतिवरो वज्रजङ्घनृपजतेर्मन्त्री आदिशब्दादानन्दो नाम तस्यैव पुरोहितोऽकम्पनाभिधानः सेनापतिर्धनमित्रनामा च श्रेष्ठी । पुनरादिशब्दात्सूकरो वानरो नकुलश्च गृह्यते । मतिवरश्च व्याघ्रश्च मतिवरव्याघ्रौ तावादी येषामानन्दाख्यपुरोहितादीनां तद्वनवासिसूकरादीनां च ते मतिवरव्याघ्रादय इति विग्रहः । किंविशिष्टाः सन्तोऽनुमोदका एष साधु करोतीति तद्दानस्यानुमन्तारः तत्कर्तृत्वकारयितृत्वानुमोदकत्वपरिणामद्वारायातसुकृतसंघातहतुकं मुनिदानफलं कर्तृकस्य भव्यात्मनः चेतासि चमत्कारं न करोति ? सर्वस्यापि करोतीत्यर्थः । कदा अधुनाऽपि । किं पुनस्तत्काले । किंविशिष्टं सत् आप्तोपदेशाद्धकव्यक्तं आप्तानां परापरगुरूणामुपदेशो रहस्यवाक्यमाप्तोपदेशः स एवाद्धक आदर्शः स्वविषयार्थस्पष्टप्रतीतिनिमित्तत्वादाप्तोपदेशाद्धकस्तत्र तेन वा व्यक्तं प्रतीतियोग्यतां नीतम् ॥

**अर्थ—मुनिदानापासून तें करणारा वज्रजंघराजा जें फल प्राप्त होता झाला, आणि तें करविणारी त्याची महापतिव्रता श्रीमती नांवाची पत्नी जें फल प्राप्त होती**

झाली तसेंच त्याला अनुमोदन देणारे मतिवर, व्याघ्र इत्यादि प्रधान वगैरे जीव जें फल प्राप्त होते झाले तें फल आतां सुद्धां आप्तांच्या (यथार्थ भाषण करणाऱ्यांच्या) सांगण्यावरून स्पष्ट समजलें असतां; कोणत्या भव्यजीवाच्या मनास आनंद उत्पन्न करणार नाहीं! सर्वांना संतोष करील.

अधुना अतिथ्यन्वेषणविधिं श्लोकद्वयेनाह—

आतां; अतिथीस हुडकण्याचा विधि दोन श्लोकांनीं सांगतात.

कृत्वा माध्याह्निकं भोक्तु- ।
मुद्युक्तोऽतिथये ददे ॥
स्वार्थं कृतं भक्तमिति ।
ध्यायन्नतिथिमीक्षताम् ॥ ५१ ॥

टीका—ईक्षतामतिथिसंविभागव्रती श्रावकः अन्वेषयतु । कं अतिथिं । किं कुर्वन् ध्यायन् एकाग्रतया चिन्तयन् । किमिति एतत् । किमेदातित्याह—ददे प्रयच्छाम्यहं । किं तत् भक्तमाहारं कस्मै अतिथये प्रागुक्तलक्षणाय । किंविशिष्टं कृतं साधितं । किमर्थं स्वार्थं आत्मार्थं आत्मनो निमन्त्रणादौ सत्यात्मीयार्थमपि । स्वस्मै इदं स्वार्थमित्यस्य कृता पदेन विग्रहः । कीदृशो भूत्वा एतध्यायन्नतिथिमीक्षतामित्यत्राह—उद्युक्तः उद्यतः । किं कर्तुं भोक्तुं भोजनं करिष्याम्यहमित्यध्यवसानाभिमुखः । किं कृत्वा कृत्वा विधाय । किं तत् माध्याह्निकं मध्याह्ने भवं कर्म स्नानदेवार्चनादिकं ॥

अर्थ—मध्यान्हीं करावयाची क्रिया संपवून भोजनास तयार असलेल्या श्रावकानें 'हें आपल्याकरितां व आपल्या

संबंधी लोकांकरितां केलेलें अन्न, अतिथीस देतों' असें चिंतन करीत अतिथीस हुडकावें.

द्वीपेष्वर्धतृतीयेषु ।
पात्रेभ्यो वितरन्ति ये ॥
ते धन्या इति च ध्याये- ।
दतिथ्यन्वेषणोद्यतः ॥ ५२ ॥

टीका—ध्यायेच्च चिन्तयेत् । कोऽसौ अतिथ्यन्वेषणोद्यतः श्रावकः । किं इति एतत् । वर्तन्ते के ते गृहस्थाः किंविशिष्टाः धन्याः पुण्यवन्तः । ये किं ये वितरन्ति यथाविधि प्रयच्छन्ति । केभ्यः । पात्रेभ्यः केषु द्वीपेषु किंविशिष्टेषु अर्धतृतीयेषु जम्बूद्वीपे धातकीखण्डे पुष्करवरद्वीपस्य चार्धे अर्धतृतीयो येषां ते अर्धतृतीया इति विग्रहः ॥

अर्थ—तसेंच अतिथीस हुडकूं लागलेल्या श्रावकानें 'ह्या अडीच द्वीपांत ( १ जंबूद्वीप, १ धातकीखंड आणि पुष्करवरद्वीप अर्धें, मिळून अडीच द्वीपांत ) योग्य पात्रास जे दान करितात, ते धन्य आहेत' असेंही चिंतन करावें.

भूम्यादीनां देयत्वं ग्रहणादौ च दानं नैष्ठिकस्य हिंसासम्यक्त्वोपघातहेतुत्वप्रकाशनेन निषेध्दुमाह—

आतां; भूमी वगैरे दिलें असतां हिंसा होते, व ग्रहणादिक जे मिथ्यादृष्टींनीं पर्वकाल मानिले आहेत, त्यावेळीं दान केलें असतां नैष्ठिकश्रावकाच्या सम्यक्त्वाचा नाश होतो, असें दाखवून त्याचा निषेध करितात.

हिंसार्थत्त्वान्न भूगेह- ।

लोहगोश्वादि नैष्ठिकः ॥
दद्यान्न ग्रहसङ्क्रान्ति- ।
श्राध्दादौ च सुदृग्द्रुहि ॥ ५३ ॥

टीका—न दद्यान्न प्रयच्छेत् । कोऽसौ नैष्ठिको दर्शनिकादिगृही । किं तत् भूगेहलोहगोश्वादि भूश्च भूमिर्गेहं च गृहं लोहं च शस्त्रोपादानं गौश्चानड्वाही अश्वश्च घोटको भूगेहलोहगोश्वास्ते आदयो यस्य कन्याहेमतिलदध्यन्नादेर्बाह्यैः पुण्यार्थतया देयत्वेन समर्थितस्य द्रव्यस्य तत् भूगेहादिद्रव्यं नैष्ठिको न दद्यात् । कस्मात् हिंसार्थत्वात् प्राणिवधनिमित्तत्त्वात् । एतस्योत्तरस्य च समर्थनं ज्ञानदीपिकायां विस्तरतोऽभिहितं प्रतिपत्तव्यं । न च दद्यान्नैष्ठिकः स्वद्रव्यं । कस्मिन् ग्रहसंक्रान्तिश्राध्दादौ ग्रहः सूर्याचन्द्रमसोरुपरागः, संक्रान्तिः सूर्यस्य राश्यन्तरसंक्रमणं श्राध्दं मृतपित्राद्युद्देशेन दानं, ग्रहश्च संक्रान्तिश्च श्राध्दं च ग्रहसंक्रान्तिश्राद्धानि तान्यादयो यस्य वारव्यतिपादादेर्बाह्यैः पुण्यार्थत्वेन समार्थितस्य पर्वणस्तद्ग्रहादि पर्व तस्मिन् । तस्य पुण्यार्थदानविषयत्वकल्पनायां दोषसमर्थनार्थमाह—किंविशिष्टे तत्र सुदृग्द्रुहि सम्यक्त्वघातके । यद्यपि च नैष्ठिक इति वचनात्पाक्षिकस्यानुत्पन्नसम्यक्त्वावस्थतया भूम्यादिदानं न प्रतिषिध्यते तथापि ग्रहणादौ तस्यापि दानमविधेयमेव सम्यक्त्वोपघातस्य तेनाप्यवश्यपरिहार्यत्वात् ॥

**अर्थ**—नैष्ठिक श्रावकानें भूमि, घर, लोह, गाय, घोडा वगैरे पदार्थ, 'ते दान केले असतां हिंसा होते म्हणून' यांचें दान करूं नये. तसेंच आपल्या समक्त्वाचा नाश करणाऱ्या ग्रहण, संक्राति, श्राद्ध वगैरे या दिवशीं दान

करूं नये. [श्लोकांत 'नैष्ठिक' असा शब्द असल्यानें पाक्षिक श्रावकानें भूमि, घर वगैरे पदार्थ दान केले असतां चालेल असें जरी सिद्ध होत आहे, तथापि, त्यानें देखील ग्रहण वगैरे दिवशीं दान करूं नये. कारण, पाक्षिक श्रावकानेंहि सम्यक्त्वाची हानि न होऊं देण्याविषयीं अवश्य जपलें पाहिजे.]

तद्व्रतातिचारपरिहारार्थमाह—

आतां; ह्या व्रताच्या अतिचारांचा त्याग करण्याकरितां सांगतात.

त्याज्याः सचित्तनिक्षेपोऽ
तिथिदाने तदावृतिः ॥
सकालातिक्रमपर- ।
व्यपदेशश्च मत्सरः ॥ ५४ ॥

टीका—त्याज्याः तद्व्रतिना वर्जनीयाः। के ते सचित्तनिक्षेपस्तदावृतिः कालातिक्रमपरव्यपदेशाभ्यां सह मत्सरश्चेत्यमी पञ्चातिचाराः। क अतिथिदाने अतिथिसंविभागव्रते। तत्र सचित्तनिक्षेपः— सचित्ते सजीवे पृथिवीजलकुम्भोप(चुल्लि)भुवल्लिधान्यादौ निक्षेपो देयस्य वस्तुनः स्थापनं। तच्चादानबुध्या तत्र निक्षेप्यमाणमतिचारः। तुच्छबुद्धिः खलु सचित्तनिक्षिप्तं किल संयता न गृह्णन्तीत्यभिप्रायेण देयं सचित्ते निक्षिपतीति तच्च। संयतेष्वगृह्णत्सु लाभोऽयं ममेति च मन्यते इति प्रथमः ॥ १ ॥ तदावृतिः तेन सचित्तेन पत्रपुष्पादिना तथाविधयैव बुध्या आवृतिराच्छादनं द्वितीयः ॥ २ ॥ अथवा सचित्तनिक्षिप्तं तत्पिहितं च संयतस्याजानतः प्रयुज्यमानमतीचारः ॥ २ ॥ कालातिक्रमः साधूनामुचितस्य भिक्षासमयस्य

लङ्घनं। स च यतीनयोग्ये काले भोजयतोऽनगारवेलाया वा प्रागेव पश्चाद्वा भुञ्जानस्य च तृतीयः स्यात् ॥ ३ ॥ परव्यपदेशः परस्यान्यस्य सम्बन्धीदं गुडखण्डादीति विशेषेणापदेशो व्याजा-द्यदि वाऽयमत्र दाता दीयमानोऽप्ययमस्येति समर्पणं चतुर्थः ॥४॥ मत्सरः कोपः। यथा मार्गितः सन् कुप्यति, सदपि वा मार्गितं न ददाति प्रयच्छतोऽप्यादराभावो वा, अन्यदातृगुणासहिष्णुत्वं वा मत्सरः। यथाऽनेन तावच्छ्रावकेण मार्गितेन दत्तं किमहमस्मादपि हीनः इति परोन्नतिवैमनस्याद्ददाति । एतच्च मत्सरशब्दस्याने-कार्थत्वात्सङ्गच्छते ॥ तदुक्तं– मत्सरः परसम्पत्त्यक्षमायां तद्वति क्रुधि ॥ एते पूर्वे चाज्ञानप्रमादानामतिचाराः। अन्यथा तु भङ्गा एवेति विभावनीयम् ॥

**अर्थ**—अतिथिसंविभागव्रत करणाऱ्या श्रावकानें ह्या व्रतांत १ सचित्त निक्षेप करूं नये. ह्मणजे भूमि, हिरवें पान, पाण्याची घागर ह्यांवर दान करण्याची वस्तू ठेवूं नये. कारण त्या सजीव पदार्थांतील सूक्ष्मजंतू दान करण्याच्या पदार्थांत शिरतात, व त्या योगानें हिंसा होते. तसेंच २ तदावृति करूं नये. ह्मणजे सजीवपदा-र्थानें (हिरव्या पानानें) द्यावयाची वस्तू झांकूं नये. तसें केलें असतां पूर्वीप्रमाणेंच हिंसा होत असल्यामुळें संयतयति तो पदार्थ स्वीकारीत नाहीं. यतीनें न स्वीकारिला तर तो पदार्थ आपल्या उपयोगीं पडेल, असें ह्मणणें ही तुच्छ बुद्धी होय! ही बुद्धी असणें निंद्य आहे. ३ कालातिक्रम करूं नये. ह्मणजे यतीच्या भोजनास योग्य असलेली वेळ दवडूं नये. योग्य समय जाऊं दिला असतां अयोग्य समयीं यतीकडून भोजन

करविल्यानें अतिथिसंविभागव्रताचा अतीचार होतो. ४ परव्यपदेश करूं नये. ह्मणजे दान करण्यास योग्य असलेला कोणताही आपला पदार्थ कपटानें दुसऱ्याचा आहे असें सांगूं नये. तसें सांगण्यानेंहि अतीचार होतो. ५ मत्सर करूं नये. ह्मणजे एखादा अतिथि आपल्या घरीं शोध काढीत आला असतां त्यावर कोप करूं नये. त्याला पाहिजे असलेले पदार्थ नाहींत असें ह्मणूं नये. व दान करीत असतां अतिथीचा अनादर करूं नये. आणि दान करणाऱ्या कोणत्याही मनुष्याचा द्वेष करूं नये.

प्रकृतार्थोपसंहारपुरस्सरमुक्तशेषं निर्दिशन् श्रावकस्य महाश्रावकत्वमाह—

आतां; आरंभ केलेल्या प्रतिपादनाची समाप्ती करून व त्यांत सांगावयाचें राहिलेलें थोडक्यांत सांगून, त्याप्रमाणें वागणाऱ्या श्रावकास महाश्रावकत्व प्राप्त होतें असें सांगतात.

एवं पालयितुं व्रतानि विदधच्छीलानि सप्तामला- ।
न्यागूर्णः समितिष्वनारतमनोदीप्राप्तवाग्दीपकः ॥
वैयावृत्यपरायणो गुणवतां दीनानतीवोद्धरँ- ।
श्चर्यां दैवसिकीमिमां चरति यः स स्यान्महाश्रावकः ॥

टीका—स्यात् भवेत् । कोऽसौ स गृही । किंविशिष्टो महाश्रावकः महानिन्द्रादीनां पूज्यः । श्रुणोति तत्त्वं गुरुभ्य इति श्रावकः महाँश्चासौ श्रावकश्च महाश्रावकः । यः किं यश्चरति अनुतिष्ठति । कां चर्यां आचारं । किंविशिष्टां दैवासिकीं दिवसे

अहोरात्रे भवा दैवसिकी तां । पुनः किंविशिष्टां इमां अनन्तराध्याये वक्ष्यमाणां । किं कुर्वन् विदधत् आचरन् । कानि शीलानि व्रतपरिरक्षणानि । कति सप्त गुणव्रतत्रयशिक्षाव्रतचतुष्टयलक्षणानि । किंविशिष्टानि विदधत् अमलानि निरतिचाराणि । कथमेवमुक्तप्रकारेण । किं कर्तुं पालयितुं पालयिष्याम्यहमित्यभिप्रायेण । कानि व्रतानि सम्यग्दर्शनपूर्वाणि निरतिचारपञ्चाणुव्रतानि । किंविशिष्टः सन् आगूर्णः उद्यतः । कासु समितिषु श्रुतनिरूपितक्रमेणेर्याभाषैषणादाननिक्षेपोत्सर्गप्रभृतिषु संयमरूपाणुव्रतनिष्ठ इत्यर्थः । अणुव्रतमहाव्रतानि हि समितिसहितानि संयमस्तद्रहितानि विरतिरिति सिद्धान्तः । तदुक्तं— अणुव्वयमहव्वयाइं समिदीसाहिदायिं संजमो समिदिहिं विणा विरदि इति ॥ पुनः किंविशिष्टः अनारतमनोदीप्राप्तवाग्दीपकः आप्तानां परापरगुरूणां वाग्वचनमाप्तवाक् तज्जन्यश्रुतज्ञानमिह गृह्यते । कारणे कार्योपचारात् । आप्तवागेव दीपकः प्रदीपः स्वपरप्रकाशकत्वादाप्तवाग्दीपकः परमागमप्रदीपकः, अनारतं सततं मनसि चित्ते दीप्रो दीपनशीलोऽनारतमनोदीप्रस्तथाविध आप्तवाग्दीपको यस्य स तथोक्तः । पुनः किंविशिष्टो वैयावृत्त्यपरायणो वैयावृत्त्यं निरवद्यवृत्त्या आपत्प्रतीकारः तत्र परायणस्तत्परः । केषां गुणवतां गुणभाजां संयमविकल्पातिशयभाजां रत्नत्रयाराधकानां वा । पुनः किं कुर्वन् उद्धरन् दुःखाद्विमोचयन् । कान् दीनान् अवृत्तिव्याधिशोकार्तान् । कथमतीव पाक्षिकाद्यपेक्षयाऽतिशयेन । एतेन सम्यग्दर्शनशुद्धत्वं व्रतभूषणभूषितत्वं निर्मलशीलनिधित्वं संयमनिष्ठत्वं जिनागमज्ञत्वं गुरुशुश्रूषकत्वं दयादिसदाचारपरत्वं चेति सप्तगुणयोगान्महाश्रावकत्वं कस्याचित्सुकृतिनः कालादिलब्धिविशेषवशाद्भवतीति तात्पर्यार्थोऽत्र प्रतिपत्तव्य इति भद्रम् ॥

अर्थ—ह्याप्रमाणें वर सांगितलेली सात प्रकारचीं शीलव्रतें, अतीचार न होऊं देतां यथाविधि पाळण्याकरितां शास्त्रांत सांगितलेल्या क्रमानें संयम करण्याविषयीं उद्युक्त असलेला व ज्याच्या मनांत आप्तोपदेशरूपी दीप निरंतर प्रज्वालित आहे असा व रत्नत्रयाचें आराधन करणाऱ्यांस प्राप्त झालेलीं संकटें घालविण्यास तत्पर असलेला व दीन झालेल्यास दुःखापासून सोडविणारा जो श्रावक, प्रतिदिनीं करण्याविषयीं सांगितलेली ही क्रिया आचरण करितो, तो महाश्रावक (इंद्रादिकांनाहि पूज्य असा) होतो.

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां
भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितश्चतुर्दशः प्रक्रमाच्च
पञ्चमोऽध्यायः समाप्तः ॥

अध्याय पांचवा समाप्त.

---

## ॥ अथ षष्ठोऽध्यायः ॥

इदानीमाहोरात्रिकमाचारं श्रावकस्योपदेष्टुकामः पूर्वं पौराह्णिकी-मितिकर्तव्यतां चतुर्दशभिः श्लोकैर्व्याकरोति ॥

**आतां; अहोरात्र करावयाच्या क्रियांचा श्रावकास उपदेश करण्याकरितां प्रथम मध्यान्हापर्यंत करावयाचीं कर्में चवदा श्लोकांनीं विवरण करून सांगतात.**

ब्राह्मे मुहूर्त उत्थाय ।
वृत्तपंचनमस्कृतिः ॥
कोऽहं को मम धर्मः किं ।
व्रतं चेति परामृशेत् ॥ १ ॥

टीका—परामृशेत् चिन्तयेत् श्रावकः । किं इति एतत् तद्यथा कोऽहं क्षत्रियो ब्राह्मणादिर्वा इक्ष्वाकुवंशोद्भवोऽन्यवंशोद्भवो वाऽहमित्यादि चिन्तयेत् । तथा को मम धर्मो जैनोऽन्यो वा श्रावकीयो यत्यादिसंबंधी वा मे देवादिसाक्षिकं प्रतिपन्नो वृष इति चिन्तयेत् । तथा किं व्रतं मूलगुणरूपमणुव्रतादिरूपं वा मम । चशब्दात् के गुरवो ममेति । कुत्र ग्रामे नगरादौ वा वसामीति । कोऽयं कालः प्रभातादिरिति चेत्यादि समुच्चीयते । स्ववर्णादिस्मृतौ हि तद्विरुद्धपरिहारं सुखेन करोति । कथम्भूतो भूत्वा वृत्तपञ्चनमस्कृतिः अन्तर्जल्पेन बहिर्जल्पेनापि वा वृत्ता पठिता पञ्चनमस्कृतिः णमो अरहंताणमित्यादिगाथारूपः पञ्चनमस्कारो येन स तथोक्तः । किं कृत्वा तेनेत्याह उत्थाय विनिद्रीभूय । क्व मुहूर्ते नाडीद्वये । किंविशिष्टे ब्राह्मे ब्राह्मी सरस्वती देवता अस्येति ब्राह्मस्तस्मिन्नि-

शावसानघटिकाद्वय इत्यर्थः। तदुक्तं– ब्राह्मे मुहूर्ते उत्थाय सर्वकार्याणि चिन्तयेत्। यतः करोति सान्निध्यं तस्मिन् हृदि सरस्वती ॥ ततः—

अर्थ—श्रावकानें पहांटेच्या दोन घटका रात्रीं उठून, पंचनमस्कारांचें पठण करून, मी कोण? माझा धर्म कोणता? माझें व्रत कोणतें? याचा विचार करावा.

अनादौ बम्भ्रमन् घोरे।
संसारे धर्ममार्हतम् ॥
श्रावकीयमिमं कृच्छ्रात्।
किलापं तदिहोत्सहे ॥ २ ॥

टीका—किल एवं ह्यागमे श्रूयते आपं प्राप्तोऽहं। कं धर्मं। किंविशिष्टं आर्हतं अर्हता वीतरागसर्वज्ञेन प्रोक्तं। किंप्रयोक्तृकं श्रावकीयं श्रावकाणामयं श्रावकीयस्तमुपासकोपासनीयमित्यर्थः। कीदृशमिमं इदानीमप्यंतःस्फुरंतं। कस्मादापं कृच्छ्रात् जगत्यनन्तैकेत्यादिना प्रागुक्तात्। किं कुर्वन् बम्भ्रमन् कुटिलं पर्यटन्। क्व संसारे द्रव्यक्षेत्रकालभवभावपरिवर्तनरूपे आजीवञ्जीवीभावे। किंविशिष्टे घोरे भयङ्करे। पुनः किंविशिष्टे अनादौ नास्ति पूर्वो यस्यासावनादिः तस्मिन् बीजाङ्कुरन्यायेन सन्तत्या वर्तमान इत्यर्थः। तत्तस्मात् उत्सहे प्रमादपरिहारेण वर्तेऽहं। क्व इहास्मिन् अत्यन्तदुर्लभे धर्मे ॥

अर्थ—अनादि अशा ह्या भयंकर संसारांत वरचेवर फिरणारा असा मी; मोठ्या कष्टानें, श्रावकानें आचरण करण्यास योग्य व सर्वज्ञ श्रीजिनेंद्रानें प्रतिपादित अशा

ह्या जिनधर्माप्रत प्राप्त झालों आहे. ह्मणून, ह्या धर्मांत, प्रमाद न होऊं देतां वागेन!

इत्यास्थायोत्थितस्तल्पा- ।
च्छुचिरेकायनोऽर्हतः ॥
निर्मायाष्टतयीमिष्टिं ।
कृतिकर्म समाचरेत् ॥ ३ ॥

टीका—समाचरेत् सम्यगनुतिष्ठेत् व्रतिकः । किं तत् कृतिकर्म योग्यकालासनेत्यादिना प्राक्प्रबन्धेन सूचितप्रायं वन्दनाविधानं । किं कृत्वा निर्माय कृत्वा कां इष्टिं पूजां किंविशिष्टामष्टतयीं अष्टौ जलगन्धाक्षतादयोऽवयवा यस्याः सा अष्टतयी तामष्टविधामित्यर्थः। कस्य अर्हतः भगवतोऽर्हद्देवस्य । उपलक्षणात् श्रुतस्य गुरुचरणानां च । किंविशिष्टः सन् एकायनः एकाग्रमनाः । कथम्भूतो भूत्वा शुचिः शरीरचिंन्तां कृत्वा विधिवद्विहितशौचस्नानदन्तधावनादिक्रियः। एतच्चानुवादपरं लोकप्रसिद्धत्वान्मलोत्सर्गाद्यर्थस्य नोपदेशः। परमप्राप्ते शास्त्रस्यार्थवत्त्वादेवमुत्तरत्राप्यप्राप्त आमुष्मिकादिविषये उपदेशः फलवानिति चिन्त्यं । किंविशिष्टः सन् उत्थितः उत्थीभूतः कस्मात् तल्पात् त्यक्तशयनीय इत्यर्थः । किं कृत्वा आस्थाय प्रतिज्ञाय । कथमित्येवमनादावित्यादिना पूर्वोक्तप्रकारेण । ततश्च—

अर्थ—ह्याप्रमाणें प्रतिज्ञा करून शयनावरून उठावें, आणि मुखमार्जन स्नान वगैरेंनीं शुद्ध होऊन एकाग्रमनानें जल गंध अक्षता वगैरे आठ द्रव्यांच्या योगानें श्रीजिनेंद्राची पूजा करून, वंदनाविधि करावा.

समाध्युपरमे शान्ति- ।

मनुध्याय यथाबलम् ॥
प्रत्याख्यानं गृहीत्वेष्टं ।
प्रार्थ्य गन्तुं नमेत् प्रभुम् ॥ ४ ॥

**टीका**—नमेत् पञ्चाङ्गप्रणामेन नमस्येत कृतक्रियः श्रावकः । कं प्रभुं अर्हद्देवं । किं कर्तुं गन्तुं इष्टदेशान्तरं विहर्तुं । किं कृत्वा प्रार्थ्य याचित्वा । किं तत् इष्टं वांछितं पुनर्दर्शनसमाधिमरणादिकं । किं कृत्वा गृहीत्वा प्रतिपद्य । किं तत् प्रत्याख्यानं भोगोपभोगादिनियमविशेषं । कथं यथाबलं शक्त्यनतिक्रमेण । किं कृत्वा अनुध्याय अनुचिन्त्य । कां शान्तिं । येऽभ्यर्चिता मकुटकुण्डलहाररत्नैरित्यादिप्रबंधेन श्रूयमाणां । क्व सति समाध्युपरमे समाधेरवश्यकरणीयस्य धर्म्यध्यानस्य निवृत्तौ । ततश्च—

**अर्थ**— मग धर्म्यध्यान समाप्त झाल्यावर शांतिभक्तीचा पाठ करून आपल्या शक्तीप्रमाणें भोगोपभोगपरिमाणादिव्रताचा स्वीकार करून व इष्ट असलेल्या समाधिमरणादिकांविषयीं प्रार्थना करून, इच्छितस्थलीं जाण्याकरितां प्रभूस नमस्कार करावा.

साम्यामृतसुधौतान्त- ।
रात्मराजज्जिनाकृतिः ॥
दैवादैश्वर्यदौर्गत्ये ।
ध्यायन् गच्छेज्जिनालयम् ॥ ५ ॥

**टीका**—गच्छेत् व्रजेत् तथानुष्ठितावश्यकः श्रावकः । कं जिनालयं अर्हच्चैत्यगृहं । किंविशिष्टः सन् साम्येत्यादि साम्यं जीवितमरणादौ समतापरिणामस्तदेवामृतं प्रसक्तिप्रकर्षहेतुत्वात्तेन

सुष्ठु संस्कारदार्ढ्यलक्षणप्रकर्षापादनेन अतिशयेन धौतः क्षालितो विशुद्धिमापादितः अन्तरात्मा स्वपरभेदज्ञानोन्मुखमन्तःकरणं तत्र राजन्ती दीप्यमाना जिनाकृतिः परमात्ममूर्तिर्यस्य स तथोक्तः। किं कुर्वन् गच्छेत् ध्यायन् चिन्तयन्। के ऐश्वर्यदौर्गत्ये ऐश्वर्यमर्थाद्याधिपत्यं दौर्गत्यं दारिद्र्यं ऐश्वर्यं च दौर्गत्यं च ऐश्वर्यदौर्गत्ये सम्भवन्तीति ध्यायन्। कस्मात् दैवात् पुराकृतशुभाशुभकर्मविपाकात्। इदमत्रैदम्पर्यं यदीश्वरो महर्द्धिको राजा सामन्तादिर्वा भवति तदा पुण्यविपाकप्रभवा सम्पदियं न पौरुषेयी तदस्यां कथमात्मज्ञो मदमुपेयादिति भावयन् गच्छेत्। अथ दरिद्रस्तदा पापविपाकजनितमिदं दारिद्र्यदुःखं न केनापि च्छेत्तुं शक्यं तदत्र को बुद्धिमान् विषादमासीदतीति भावयन् गच्छेदिति ॥

**अर्थ**—मग, जगणें व मरणें ह्या दोहोंविषयीं समबुद्धिरूपी अमृतानें शुद्ध झालेल्या ज्याच्या अंतःकरणांत श्रीजिनेंद्राची मूर्ति विराजित झाली आहे (शुद्धांतःकरणांत जिनमूर्तीचें ध्यान करणाऱ्या) अशा श्रावकानें, " संपत्ति व विपत्ति ह्या दैवाधीन आहेत " असा विचार करून, जिनमंदिरास गमन करावें.

अनुवादमुखेन चैत्यालयव्रजनविधिमाह—

आतां; चैत्यालयांत जाण्याचा प्रकार सांगतात.

यथाविभवमादाय ।
जिनाद्यर्चनसाधनम् ॥
व्रजन्कौत्कुटिको देश- ।
संयतः संयतायते ॥ ६ ॥

टीका—संयतायते संयतं यतिमिवात्मानमाचरति । कोऽसौ देशसंयतः श्रावकः । किं कुर्वन् व्रजन्गच्छन् । किंविशिष्टः सन् कौत्कुटिकः पुरो युगमात्रप्रेक्षीत्यर्थः । किं कृत्वा आदाय गृहीत्वा । किं तत् जिनादीनामर्हच्छ्रुताचार्याणामर्चनसाधनं पूजाङ्गं जलगन्धाक्षतादिकं । कथं यथाविभवं स्वसम्पदनुसारेण ॥

अर्थ—आपल्यास द्रव्याची अनुकूलता जशी असेल त्या मानानें श्रीजिनेंद्रादिकांच्या पूजेचें साहित्य घेऊन जो देशसँयत श्रावक चार हात लांबीपेक्षां अधिक लांब प्रदेशांकडे न बघणारा असा होत्साता– जिनालयांत गमन करतो, तो श्रावक यतीप्रमाणें वागत आहे, असें समजावें. (अशा श्रावकास यतीप्रमाणें मानावें.)

दृष्ट्वा जगद्बोधकरं ।
भास्करं ज्योतिरार्हतम् ॥
स्मरतस्तद्गृहशिरो- ।
ध्वजालोकोत्सवोऽघत्हृत् ॥ ७ ॥

टीका—भवति । कोऽसौ तद्गृहशिरोध्वजालोकोत्सवः जिनचैत्यालयशिखरकेतनदर्शनानंदः । किंविशिष्टोऽघत्हृत् पापहरः । कस्य तथागच्छतः श्रावकस्य । किं कुर्वतः स्मरतः स्मृतिविषयीकुर्वतः । किं तत् ज्योतिः ज्ञानमयं वाङ्मयं वा तेजः । किंविशिष्टमार्हतं जैनं । किं कृत्वा दृष्ट्वा आलोक्य कं भास्करमादित्यं । किंविशिष्टं जगद्बोधकरं जगतां दिवाचरप्राणिनां बोधं निद्रापनोदं करोतीत्येवंशीलं उद्यन्तमित्यर्थः । पक्षे बहिरात्मप्राणिनां मोहनिद्राप्रहरणशीलम् ॥

अर्थ—जगास जागृत करणाऱ्या ( उदय पावत असलेल्या ) सूर्यास पाहून, तेजोमय अशा अर्हत्परमेश्वराचें स्मरण करणाऱ्या श्रावकास जिनमंदिराच्या शिखरावर असलेल्या ध्वजांच्या अवलोकनानें—होणारा आनंद, त्याचें सर्व पाप घालविणारा होतो.

वाद्यादिशब्दमाल्यादि- ।
गन्धद्वारादिरूपकैः ॥
चित्रैरारोहदुत्साह- ।
स्तं विशेन्निसहीगिरा ॥ ८ ॥

टीका—विशेत् प्रविशेदसौ कं तं जिनालयं । कया निसहीगिरा निसहीति शब्दमुच्चारयन्नित्यर्थः । किंविशिष्टः सन् आरोहदुत्साहः प्रवर्द्धमानधर्माचरणोद्योगः । कैः वाद्यादीत्यादि वाद्यानां प्राभातिकतूर्याणामादिशब्देन स्वाध्यायस्तुतिमङ्गलगीतादीनां च शब्दैर्निनादैः । तथा माल्यादीनां चम्पकपुष्पादिमालानां आदिशब्देन धूपचूर्णादीनां च गंधैरामोदैस्तथा द्वारस्य प्रवेशमुखस्य आदिशब्देन तोरणस्तम्भशिखरादीनां च रूपकैश्चेतनाचेतनप्रतिच्छन्दैः । किंविशिष्टैश्चित्रैर्नानाप्रकारैर्विस्मयकरैश्च ॥

अर्थ—आल्हाद देणारे असे वाद्यादिकांचे शब्द, पुष्पादिकांचा सुगंध व द्वारादिकांचे आकार ह्यांच्या योगानें ज्याचा आनंद वाढत आहे अशा श्रावकानें 'निसही' असा शब्द उच्चारीत त्या जिनमंदिरांत प्रवेश करावा.

क्षालितांघ्रिस्तथैवान्तः ।

प्रविश्यानन्दनिर्भरः ॥

त्रिः प्रदक्षिणयेन्नत्वा ।

जिनं पुण्याः स्तुतीः पठन् ॥ ९ ॥

टीका—प्रदक्षिणयेत् प्रदक्षिणीकुर्यादसौ। कं जिनं स्थापनार्हन्तं। कथं त्रिस्त्रीन् वारान्। किं कुर्वन् पठन् निगदन्। काः स्तुतीः स्तवनवाक्यानि। किंविशिष्टाः पुण्याः ज्ञानसंवेगादिगुणप्रव्यक्तीकरणेन अशुभकर्मनिर्जरणीः पुण्यास्रवणीश्च। किं कृत्वा नत्वा त्रिः प्रणम्य जिनं। किंविशिष्टः सन् आनन्दनिर्भरः प्रमोदपूरितसर्वांगः। किं कृत्वा प्रविश्य आक्रम्य। किं तत् अन्तः चैत्यालयमध्यदेशं। कथं तथैव निसहीगिरैव। कथम्भूतो भूत्वा क्षालिताङ्घ्रिः धौतपादः ॥

अर्थ—मग पादप्रक्षालन करून, पूर्वीप्रमाणेंच 'निसही' ह्या शद्बाचा उच्चार करीत आंत प्रवेश करून, आनंदित झालेल्या श्रावकानें, श्रीजिनेंद्रास नमस्कार करून, पुण्यकारक अशा जिनस्तोत्राचा पाठ करीत तीन प्रदक्षिणा कराव्या.

सेयमास्थायिका सोऽयं ।

जिनस्तेऽमी सभासदः ।

चिन्तयन्निति तत्रोच्चै-।

रनुमोदेत धार्मिकान् ॥ १० ॥

टीका—अनुमोदेत साधु इमे अनुतिष्ठन्तीति मनसाऽभिनन्देदसौ। कान् धार्मिकान् धर्मं चरतोऽनगारसागारभव्यजनान्। कथमुच्चैरतिशयेन मुहुर्मुहुरित्यर्थः। क तत्र चैत्यालये। प्रदक्षिणी-

करणे वा । किं कुर्वन् चिन्तयन् परामृशन् । कथमिति किमिति इयं चैत्यालयभूमिः । सा आगमप्रसिद्धा । आस्थायिका समवसरणभूमिः । तथा अयं प्रतिमार्पितो जिनः स आगमप्रसिद्धोऽष्टमहाप्रातिहार्यादिविभूतिभूषितोऽर्हन् । अमी आराधकभव्यास्ते आगमप्रसिद्धाः सभासदः सभ्या यत्यादयो द्वादश साक्षादर्हद्देवसेवावहिताः ॥

**अर्थ—मग त्यानें; मंदिरांतील भूमि हीच शास्त्रांत वर्णन केलेली समवसरणसभा, शास्त्रांत वर्णिलेला तोच हा जिन व ह्या ठिकाणीं असलेले भव्यजन हेच शास्त्रांत सांगितलेले समवसरणसभेंतील सभासद् आहेत, ह्याप्रमाणें चिंतन करीत त्या वस्तूंचें व धार्मिक भव्यजनांचें मनानेंच स्तवन करावें.**

अथेर्यापथसंशुद्धिं ।
कृत्वाऽभ्यर्च्य जिनेश्वरम् ॥
श्रुतं सूरिं च तस्याग्रे ।
प्रत्याख्यानं प्रकाशयेत् ॥ ११ ॥

**टीका**—प्रकाशयेत् प्रतिपादयेदेष महाश्रावकः । किं तत् प्रत्याख्यानं प्राग्गृहे गृहीतं । क्व अग्रे । कस्य तस्य सूरेः । किं कृत्वा अभ्यर्च्य अभिमुखं पूजयित्वा । कं जिनेश्वरं श्रुतं सूरिं च । किं कृत्वा कृत्वा विधाय । कां ईर्यापथसंशुद्धिं । कथं अथ प्रणामपूर्वकपुण्यस्तुतिपाठविशेषप्रदक्षिणीकरणानंतरमिति समन्वयः । अयमत्र विशेषः ईर्या ईरणं गमनं पन्था मार्गो यस्य तदीर्यापथं संयमविराधनं तस्य संशुद्धिः सम्यक् शोधनं प्रतिक्रमणमित्यर्थः । अभ्यर्च्य जावरहंताणं भयवंताणं णमोकारं करोमीति

वचनात् । प्रतिक्रमणानन्तरं नमोर्हऽस्य इत्यनेन " जयन्ति निर्जिताशेषसर्वथैकान्तनीतयः । सत्यवाक्याधिपाः शश्वद्विद्यानन्दा जिनेश्वराः " इत्यादिना वाचनिकनमस्कारेण जलादिपूजाष्टकेन वा अभिमुखं पूजयित्वा । एष क्रमः श्रुतसूर्योरपि यथास्वं कल्प्यः । स एष जघन्येन वन्दनाविधिः प्रकर्षवृत्याऽस्य प्रथममेव गृहेऽनुष्ठानोपदेशात् ॥

**अर्थ—ह्याप्रमाणें प्रदक्षिणा झाल्यावर ईर्यापथसंशुद्धि करून, मग श्रीजिनेश्वराची पूजा करावी. नंतर शास्त्र व साधु ह्यांची पूजा करून त्या साधूंच्या अग्रभागीं आपण घरीं घेतलेलें व्रत सांगावें.**

ततश्चावर्जयेत्सर्वा- ।
न्यथार्हं जिनभाक्तिकान् ॥
व्याख्यातः पठतश्चार्ह-।
द्वचः प्रोत्साहयेन्मुहुः ॥ १२ ॥

**टीका**—ततश्च प्रत्याख्यानप्रकाशनावसानक्रियाकल्पनिवर्तनानन्तरं आवर्जयेदनुरञ्जयेदसौ । कान् जिनभाक्तिकान् अर्हद्देवाराधकान् । किंविशिष्टान् सर्वान् उत्तमादिभेदभिन्नान् । कथं यथार्हं यथायोग्यप्रतिपत्त्या । तत्र मुनीन्नमोऽस्त्विति । आर्यिका वंदे इति । श्रावकानिच्छामीत्यादिप्रसिद्धविनयकर्मणोपचरेदित्यर्थः ॥ उक्तं च— अर्हद्रूपे नमोऽस्तु स्याद्विरतौ विनयक्रिया । अन्योन्यं क्षुल्लके चाहमिच्छाकारवचः सदा ॥ तथा प्रोत्साहयेत् प्रकर्षेण उद्योगवतः कुर्यादसौ । कान् पुरुषान् । किं कुर्वतो व्याख्यातः पदपदार्थादिसमर्थनलक्षणेन विशेषेण आ शिष्यबोधोत्पत्तेर्वर्णयत उपाध्यायादीनित्यर्थः । किं तद्व्याख्यातोऽर्हद्वचः परमागमयु-

क्त्यागमशब्दागमादिभेदं जिनप्रवचनं । न केवलं व्याख्यातः पठतश्च अधीयानान् शिष्यादीनित्यर्थः । कथं मुहुः पुनः पुनः ॥

अर्थ— नंतर, श्रीजिनाची आराधना करणाऱ्या उपासकांचा त्यांच्या त्यांच्या योग्यतेप्रमाणें विनय दाखवून, संतोष करावा. [ त्याचा प्रकार असा–, जे दिगंबरमुनि असतील त्यांस ' नमोऽस्तु ' ( आपल्यास नमस्कार असो ) असें ह्मणावें. आर्यिकास ' वन्दे ' ( मी नमस्कार करतों ) आणि श्रावकांस 'इच्छामि' ( तुह्मी सुखी असावें असें मी इच्छितों ) असें ह्मणावें. ] आणि, अर्हद्देवाच्या वचनांचें युक्तिप्रयुक्तीनें व्याख्यान करणारे किंवा त्या वचनांचा मुखपाठ करणारे अशा उपाध्याय वगैरे लोकांस ' तुह्मी चांगलें करतां ' असें बोलून प्रोत्साहन द्यावें.

अन्यच्च किं कुर्यादित्याह—

आणखी काय करावें ? तें सांगतात.

स्वाध्यायं विधिवत्कुर्या- ।
दुद्धरेच्च विपद्धतान् ॥
पक्वज्ञानदयस्यैव ।
गुणाः सर्वेऽपि सिद्धिदाः ॥ १२ ॥

टीका— कुर्यादसौ कं स्वाध्यायं श्रुताध्ययनं यथोचितं वाचनादिरूपं वा किंवत् विधिवत् शास्त्रोक्तविधानेन व्यञ्जनशुध्यादिलक्षणाष्टविधवचनेन । तथा उद्धरेत् विपदो विमोचयेदसौ । कान् विपद्धतान् शारीरमानसासातशतितशक्तीन् दीनानित्यर्थः । यतो भवन्ति । के ते गुणाः काठिण्यत्यागशौर्यसौन्दर्यादयः । किं

विशिष्टाः सिद्धिदाः वाञ्छितार्थसम्पादका मुक्तिप्रदा वा । किं केचिन्नेत्याह सर्वेऽपि निःशेषाः । कस्य पक्वज्ञानदयस्यैव पुंसः ज्ञानं तत्त्वावबोधः दया सर्वप्राणिषु करुणा दुःखोच्छित्यभिलाषलक्षणा, ज्ञानं च दया च ज्ञानदये, पक्के परिणते सात्मीभूते ज्ञानदये यस्य स पक्वज्ञानदयस्तस्यैव । न तु बहिर्द्योतिज्ञानस्य कादाचित्कानुकंपस्य चैवेत्येवशब्दार्थः ॥

**अर्थ—यथाविधि स्वाध्याय करावा! विपत्तीनें पीडित झालेल्यांस त्यापासून मुक्त करावें!! कारण, ज्या पुरुषाचें ज्ञान व दया हे दोनी गुण पक्वदशेस प्राप्त झाले असतील त्याचे बाकी सर्व गुण सिद्धि देणारे (मुक्ति देणारे) होतात!!!**

एवं विधेयमाचरणमुपदिश्य निषिद्धं तदुपदेष्टुमाह—

**ह्याप्रमाणें कर्तव्याविषयीं उपदेश करून आतां निषिद्धा-विषयीं सांगतात.**

मध्येजिनगृहं हासं ।
विलासं दुःकथां कलिम् ॥
निद्रां निष्ठ्यूतमाहारं ।
चतुर्विधमपि त्यजेत् ॥ १४ ॥

टीका—त्यजेदसौ हास्यादीन् सप्त । क्व मध्येजिनगृहं जिनगृह-मत्र महाश्रावकापेक्षया सकलश्चैत्यालयः इतरापेक्षया तदेकदेशो गन्धकुटिमात्रं । जिनगृहस्य मध्ये मध्येजिनगृहं । पारे मध्ये तया वेत्यनेनाव्ययीभावः । हासो हास्यं । विलासः शृंगारचेष्टा-विशेषः । दुःकथा दुष्टा चित्तकालुष्यकारिणी कथा कामक्रोधा-

दिकथा राजादिकथा वा । कलिः कलहः । निद्रा स्वापः । निष्ठ्यूतं मुखश्लेष्मादिनिरसनं ॥

अर्थ— जिनमंदिरांत- हंसणें, स्त्रियांबरोबर शृंगारचेष्टा करणें, मनाला बिघडविणाऱ्या गोष्टी, कलह, निद्रा, थुंकणें वगैरे आणि चारही प्रकारच्या पदार्थांचें भक्षण, हीं करूं नयेत. [ भक्ष्यपदार्थ—नुसतेच गिळण्याचे, चावण्याचे, पिण्याचे व चोखण्याचे असे चार प्रकारचे आहेत. ]

एवं प्राभातिकं धर्मकर्मोपदिश्यानन्तरविधेयमर्थार्जनादिविधिमाभिधत्ते—

ह्याप्रमाणें, सकाळच्या प्रहरीं करणेचा सर्व विधि सांगून आतां त्यानंतर करणेचा द्रव्यार्जनाचा विधि सांगतात.

ततो यथोचितस्थानं ।
गत्वाऽर्थेऽधिकृतान् सुधीः ॥
अधितिष्ठेद्व्यवस्येद्वा ।
स्वयं धर्माविरोधतः ॥ १५ ॥

**टीका**--ततः प्राभातिकधर्मानुष्ठाननिष्ठापनानन्तरं । अधितिष्ठत् सनाथीकुर्यात्। कोऽसौ सुधीः लोकद्वयहिताहितविचारचतुरः श्रावकः। कान् अर्थेऽधिकृतान् अर्थस्यार्जने रक्षणे वर्द्धने च नियुक्तान्। किं कृत्वा गत्वा प्राप्य । किं तत् स्थानं प्रदेशं । किंविशिष्टं यथोचितं यद्यद्यस्यार्थार्जनादियोग्यं तत्तत्तेन गम्यमित्यर्थः । वा पक्षांतरे । तादृक्सामग्र्यभावे । पुनः सुधीः स्वयमात्मना अर्थे व्यवस्येत् तदर्जनादौ व्याप्रीयेत । कस्मात् धर्माविरोधतः प्रतिपन्नजिनधर्मानुपघातेन । स च राज्ञां दरिद्रेश्वरयोर्मान्यामान्ययोरुत्तमनीचयोश्च माध्यस्थेन न्यायदर्शनात् नियोगिनां च राजार्थे-

प्रजार्थसाधनेन, वणिजां च कूटतुलामानादिपरिहारेण, वनजीविकादिपरिहारेण च बोध्द्व्यः ॥

अर्थ—मग, द्रव्य संपादनास योग्य असलेल्या स्थलीं ( दुकानांत अथवा बाजारांत ) जाऊन, द्रव्यसंपादनाकरितां व संपादित द्रव्याच्या वृद्धीकरितां नेमलेल्या लोकांवर सुबुद्धि अशा श्रावकानें देखरेख करावी. अथवा, धर्माचा भंग न होऊं देतां स्वतः देखील द्रव्यसंपादनाचा उद्योग करावा. [ तो उद्योग राजानें स्वतः करावयाचा असल्यास दरिद्री व श्रीमान्, प्रतिष्ठित व अप्रतिष्ठित, उत्तम व नीच अशा लोकांत अगदीं तिऱ्हाईतपणानें असून करावा. तसेंच त्याकरितां नेमलेल्या मनुष्यानें करणें झाल्यास, राजा व प्रजा ह्या दोघांचेंही नुकसान न होईल अशा रीतीनें करावा. आणि वैश्यानें करावयाचा असल्यास खोटें माप न करतां करावा. ]

पौरुषस्य वैफल्यसाफल्यादौ विषादहर्षपरिहारार्थमाह—

आतां; उद्योग निष्फल झाला असतां व सफल झाला असतां, त्यासंबंधानें; खेद व आनंद मानूं नयेत, अशाबद्दल सांगतात.

निष्फलेऽल्पफलेऽनर्थ- ।
फले जातेऽपि पौरुषे ॥
न विषीदेन्नान्यथा वा ।
हृषेल्लीला हि सा विधेः ॥ १६ ॥

टीका—न विषीदेत् न विषादं गच्छेदसावर्थानुबंधपरः । क्व

सति पौरुषे पुरुषकारे । किंविशिष्टे जाते निष्पन्ने । कीदृशे निष्फले चिकीर्षितप्रयोजनवन्ध्ये । तथा अल्पफले सम्भावितार्थलाभान्न्यूनार्थलाभे । तथाऽनर्थफले अनर्थोऽर्थनाशादिलक्षणपुरुषार्थभ्रंशः फलं साध्यं यस्य सोऽनर्थफलस्तस्मिन् । अपिः समुच्चये । न वा हृष्येत् हर्षंगच्छेदसौ । क्व सति पौरुषे जाते सति । कथमन्यथा सफले बहुफलेऽर्थानुबन्धफलेऽपीत्यर्थः । कुत इत्याह—हि यस्मात् वर्तते । काऽसौ सा पौरुषस्य नैष्फल्यसाफल्यादिजननलक्षणा लीला निरंकुशप्रवृत्तिः । कस्य विधेः पुरार्जितपापपुण्यकर्मणः ॥

अर्थ—उद्योग निष्फल झाला असतां, किंवा त्यापासून फल स्वल्प झालें असतां, अथवा मुळींच फल झालें नसतां खेद करूं नये! तसेंच उद्योगापासून उत्कृष्ट फल मिळालें असतां आनंदही मानूं नये!! कारण, उद्योगाचें फल येणें अथवा न येणें ही पूर्वजन्मीं केलेल्या कर्माची लीला आहे!! अर्थात् फल येणें अथवा न येणें हें आपल्या आधीन नाहीं.

अथ प्राणयात्राविध्यर्थं नवश्लोकीमाह—

आतां; पुढल्या नऊ श्लोकांनीं उपजीविकेसंबंधानें सांगतात.

कदा माधुकरी वृत्तिः ।
सा मे स्यादिति भावयन् ॥
यथालाभेन सन्तुष्ट ।
उत्तिष्ठेत तनुस्थितौ ॥ १७ ॥

टीका—ततश्च उत्तिष्ठेत अर्थचिन्तातो विरम्योद्यमं कुर्यादसौ । क्व तनुस्थितौ शरीरस्वास्थ्यानुवृत्तिनिमित्तप्रवृत्तौ । किंविशिष्टः सन्

सन्तुष्टः धृतिं गतः । केन यथालाभेन यो यो लाभो मूलधनादधिकं धनं तेन । किं कुर्वन् भावयन् चित्ते धारयन् । किं इति एतत् किमेतदित्याह कदा कस्मिन्काले । स्याद्भविष्यति । काऽसौ सा सूत्रोक्ता वृत्तिः अर्थात् भिक्षा । कस्य मे मम किंविशिष्टा माधुकरी मधुकराणां भ्रमरादीनामियं माधुकरी तत्संबंधिनीव पुष्पाणामिव दातृणामनुपपीडनेनात्मप्रीणनहेतुत्वात् ॥

अर्थ—मग, जेवढा लाभ झाला असेल तेवढ्यानेंच संतोष पावलेल्या श्रावकानें—ती माधुकरी वृत्ति ( भिक्षावृत्ति ) मला केव्हां प्राप्त होईल! असें चिंतन करीत; शरीराच्या स्वस्थतेकरितां ( भोजनाकरितां ) उद्योग करावा. [ ह्या माधुकरी वृत्तीचा अभिलाष करण्याचें प्रयोजन असें आहे कीं; तीपासून दान करणाऱ्यावर भार न होतां, आपलें कार्य होतें. ह्या माधुकरीवृत्ति शब्दाचा अर्थ— भ्रमरासारखा व्यापार, (ज्याप्रमाणें भ्रमर अनेक पुष्पांवर हिंडून त्यांना पीडा न करितां आपलें पोषण करतो; त्याप्रमाणें दान करणाऱ्यास त्रास न होऊं देतां. आपलें पोषण करणें, असा आहे....अर्थात् दिगंबरपणा. ]

नीरगोरसधान्यैधः- ।
शाकपुष्पाम्बरादिभिः ॥
क्रीतैः शुध्याविरोधेन ।
वृत्तिः कल्प्याऽघलाघवात् ॥ १८ ॥

टीका—कल्प्या सम्पाद्या । श्रावकेण । काऽसौ वृत्तिः स्वास्थ्यानुवृत्तिकरी प्रवृत्तिः । कस्मात् अघलाघवात् पापाल्पत्वात् । तदाश्रित्येत्यर्थः । कैः कल्प्या नीरादिभिः । किंविशिष्टैः क्रीतैः

मूल्यदानेन गृहीतैः । केन विशुध्याविरोधेन स्वप्रतिपन्नसम्यक्त्वव्रतानुपघातेन । तत्र नीरं जलं गोरसः क्षीरादिः धान्यं तण्डुलादिः एधांसि इन्धनानि शाकं पत्रादिहरीतकं पुष्पाम्बरादि कुसुमवस्त्रखट्वापट्टकतृणादि ॥

अर्थ—पाणी, दूध दहीं वगैरे गोरस, धान्य, इंधन, पालाभाजी व फळभाजी, फुलें, वस्त्र वगैरे विकत घेतलेल्या पदार्थांच्या योगानें; आपल्या सम्यक्त्वाची हानि न होऊं देतां; कोणत्या पदार्थांच्या सेवनांत न्यून पातक आहे हें मनांत आणून श्रावकानें शरीरनिर्वाहाचा व्यापार करावा.

सधर्मिणोऽपि दाक्षिण्या- ।
द्विवाहादौ गृहेऽप्यदन् ॥
निशि सिध्दं त्यजेद्दीनै- ।
र्व्यवहारं च नावहेत् ॥ १९ ॥

टीका—त्यजेदसौ । किं तत् सिद्धं निष्पन्नमन्नं । क्व निशि रात्रौ । तदा ह्यन्नपाके त्रसघातपातौ परिहर्तुमशक्यौ । किं कुर्वन् अदन् भुञ्जानः । क्व गृहे । कस्य सधर्मिणोऽपि न परं पुत्रादेः । किं तदासीनसाधर्मिकस्यापि । कस्मात् दाक्षिण्यात् उपरोधवशात् । क्व विवाहादावपि न परमिष्टभोज्यादौ । तथा नावहेत् न कुर्यात् । कं व्यवहारं दानप्रतिग्रहादिलक्षणं कर्म । कैः सह हीनैः सर्वधर्मधनादिना रहितैरल्पैर्वा गृहिभिः सह ॥

अर्थ— आग्रहामुळें, विवाहादि समारंभांत एखाद्या सधर्मीयाच्या घरीं देखील भोजन करीत असतां रात्रीं

शिजविलेलें अन्न खाऊं नये. व जातीनें हीन असलेल्या मनुष्यांशीं कोणत्याही प्रकारचा व्यवहार करूं नये.

उद्यानभोजनं जन्तु- ।
योधनं कुसुमोच्चयम् ॥
जलक्रीडान्दोलनादि ।
त्यजेदन्यच्च तादृशम् ॥ २० ॥

टीका—त्यजेदसौ । किं तत् उद्यानभोजनं उद्यानिकायां जेमनं । तथा जन्तुयोधनं पदातिकुक्कुटमेषादीनां परस्परसम्प्रहारं । तथा कुसुमोच्चयं पुष्पावचयं । तथा जलक्रीडां शृङ्गारादिभिः सहर्षस्पर्द्धं जलव्यात्युक्षीं तथा आन्दोलनं दोलाखेलनकर्म । आदिशब्देन चैत्रासितप्रतिपदादिषु भस्मव्यतिकारि परिहासादि । किं बहुना अन्यच्च परमपि तादृशं द्रव्यभावहिंसाबहुलं । कौमुदीमहोत्सवकुट्टननाटकावलोकनसंग्रामदर्शनरासक्रीडादिकम् ॥

अर्थ—उद्यानभोजन ( बागेंत भोजन ), जंतुयोधन ( कोंबड्यांची अथवा बकऱ्यांची झूज लावणें ), कुसुमोच्चय ( फुलें तोडणें ), जलक्रीडा ( पाण्यांत विहार करणें ) आणि आंदोलन ( झोंपाळ्यावर बसून झोंके घेणें ) हे व्यापार करूं नयेत. कारण ह्यापासून फार हिंसा होते. तसेंच ह्याप्रमाणेंच ज्यांत द्रव्यहिंसा व भावहिंसा होणें शक्य आहे असे दुसरेहि व्यापार [ चांदण्यांत खेळणें, उड्या मारणें, नाटक पहाणें, पुष्कळ स्त्रिया जमवून त्यांच्या बरोबर खेळणें, चैत्रकृष्णप्रतिपदेस ( फाल्गुनकृष्णप्रतिपदेस ) धुळवड खेळणें व अश्लील शद्ब उच्चारणें, वगैरे ] करूं नयेत.

यथादोषं कृतस्नानो ।
मध्याह्ने धौतवस्त्रयुक् ॥
देवाधिदेवं सेवेत ।
निर्द्वन्द्वः कल्मषच्छिदे ॥ २१ ॥

**टीका**—सेवेत आराधयेदसौ स्नपनादिभिः । कं देवाधिदेवं देवैरिन्द्रादिभिरधिकमाचार्यादिभ्योऽतिरिक्तं दीव्यते स्तूयते आराध्यत इति देवाधिदेवो भगवानर्हन् । किंविशिष्टः सन् निर्द्वन्द्वः समस्तव्याक्षेपमुक्तः । किमर्थं कल्मषच्छिदे प्राचीनतात्कालीनपापच्छेदार्थं । कथम्भूतो भूत्वा यथादोषं दोषानुसारेण मध्याह्ने अनगारभ्रामरीवेलाप्रत्यासन्नसमये कृतस्नानः कृतं विहितं स्नानं यथोचितमङ्गप्रक्षालनादिकं येन स तथोक्तः । तथा धौतवस्त्रयुक् धौते क्षालिते जलादिना निर्मलीकृते वस्त्रे परिधानोत्तरीये युनक्ति स्वांगे सम्बध्नातीति धौतवस्त्रयुक् ॥

**अर्थ**—मध्यान्हकालीं आपल्याकडून झालेल्या दोषास अनुसरून ज्यानें त्या दोषाच्या नाशाकरितां स्नान केलें आहे व धुतलेलीं दोन ( नेसावयाचें व पांघरावयाचें ) वस्त्रें ज्यानें धारण केलीं आहेत व ज्यानें आपलें अंतःकरण स्थिर ठेविलें आहे अशा श्रावकानें पातकाच्या नाशाकरितां श्रीजिनेंद्रांची अराधना करावी.

जिनस्नपनाद्युपास्तिविधिमाह—

आतां स्नपनादि उपासनेचा विधि सांगतात.

आश्रुत्य स्नपनं विशोध्य तदिलां पीठ्यां
चतुष्कुम्भयुक्- । कोणायां सकुशश्रियां जिन-

पतिं न्यस्यान्तमाप्येष्टदिक् ॥ नीराज्याम्बुरसाज्यदुग्धदधिभिः सिक्त्वा कृतोद्वर्तनं । सिक्तं कुम्भजलैश्च गन्धसलिलैः सम्पूज्य नुत्वा स्मरेत् ॥ २२२ ॥

टीका—स्मरेत् यथाशक्ति जपेत् ध्यायेत् । कोऽसौ माध्याह्निकक्रियाकल्पोद्यतः श्रावकः । कं जिनपतिं जिनेन्द्रं । किं कृत्वा नुत्वा नित्यवन्दनादिविधिना वन्दित्वा । किं कृत्वा सम्पूज्य जलादिभिरष्टाभिः सम्यगर्चयित्वा किंविशिष्टं सन्तं सिक्तमभिषिक्तं । कैः कुम्भजलैः पूर्वस्थापितकलशाम्भोभिः । तथा गन्धसलिलैः सुरभिद्रव्यमिश्रोदकैः । कथं कृत्वा कृतोद्वर्तनं एलादिचूर्णकल्ककषायैरुद्वर्त्य कृतनन्द्यावर्ताद्यवतारणं । किं कृत्वा सिक्त्वा अभिषिच्य । कैः अम्बुरसाज्यदुग्धदधिभिः अम्बूनि तीर्थोदकानि, रसा इक्षुद्राक्षाम्रादिनिर्यासाः, आज्यानि हैयङ्गवीनादिघृतानि, दुग्धानि गव्यादिक्षीराणि, दधीनि माहिषादीनि, अम्बूनि च रसाश्च आज्यानि च दुग्धानि च दधीनि चाम्बुरसादीनि पञ्च स्नानीयद्रवद्रव्याणि तैः क्रमेण जिनपतिमभिषिच्येति संबंधः । किं कृत्वा नीराज्य पूजापुरःसरं मृत्सागोमयभूतिपिण्डदूर्वादर्भपुष्पाक्षतसचन्दनोदकैर्नीराजनं प्रापय्य । कथं यथा भवति इष्टदिक् इष्टा यज्ञांशं प्रापिता जिनयज्ञमभिवर्द्धयन्तो वाऽनुमोदिता दिशस्तत्स्था दिक्पाला दशेन्द्रादयो यत्र नीराजनकर्मणि तदिष्टदिक् । अथवा इष्टा दिशो येन सोऽयमिष्टदिग्यष्टा । किं कृत्वा आप्य प्रापय्य । कं जिनपतिं । कमाप्य अन्तमात्मसन्निधिं । किं कृत्वा न्यस्य स्थापयित्वा । कस्यां पीठ्यां स्नपनपीठस्योपरि । किंविशिष्टायां चतुष्कुंभयुक्कोणायां चत्वारः कुंभयुजः पूर्णकलशोपेताः कोणा यस्याः सा

चतुष्कुंभयुक्कोणा तस्यां । पुनः किंविशिष्टायां सकुशाश्रियां दर्भैश्चन्दननिर्मितश्रीकाराक्षरेण च सहितायां । श्रियामित्युपलक्षणं तेन ऱ्हींकारोऽपि लेख्यः । अन्ये तु अक्षतनिर्मितं श्रीकारमेवाहुः तदुक्तं निस्तुषनिर्व्रणनिर्मलजलार्द्रशालीयतण्डुलालिखिते । श्रीकामः श्रीनाथं श्रीवर्णे स्थापयाम्युच्चैः ॥ किं कृत्वा विशोध्य रत्नाम्बुकुशाग्निना सन्तर्पणविधिभिः शोधयित्वा । कां तदिलां स्नपनभूमिं । किं कृत्वा आश्रुत्य कर्तव्यतया प्रतिज्ञाय । किं तत् स्नपनमभिषेकं । अत्र आश्रुत्य स्नपनमिति प्रस्तावना, विशोध्येत्यादि पुराकर्म, न्यस्येति स्थापना, अन्तमाप्येति सन्निधापनं, इष्टदिगित्यादि पूजेतिप्रातिपत्तव्यम् । षड्विधं हि देवसेवनमाहुः । तद्यथा-प्रस्तावना पुराकर्म । स्थापना सन्निधापनम् ॥ पूजा पूजाफलं चेति । षड्विधं देवसेवनम् ॥ १ ॥ एतज्जिनस्नपनादिविधानसूचनामात्रं विस्तरतस्त्वेतत्पूर्वाचार्यकृतस्नानशास्त्रेष्वस्मत्कृतनित्यमहोद्याख्यस्नानशास्त्रे च द्रष्टव्यम् ॥

अर्थ—श्रीजिनेंद्राराधन करण्यास प्रवृत्त झालेल्या श्रावकानें प्रथम स्नपन करण्याविषयीं प्रतिज्ञा करून, मग ती भूमी शुद्ध करून ज्याच्या च्यारी कोपऱ्यांस चार कुंभ ठेविले आहेत व ज्यावर दर्भ पसरले असून चन्दनानें अथवा तांदुळानें श्रींकार व ऱ्हींकार काढले आहेत अशा पीठावर श्रीजिनेशाची स्थापना करावी. नंतर त्या जिनबिंबासमीप जाऊन अष्टदिक्पालांचें पूजन करून मृत्तिका, दूर्वा, पुष्प अक्षता वगैरे पदार्थांनीं प्रभूस नीराजन करावें. ( हे पदार्थ देवावरून ओवाळावे व टाकून द्यावे ) नंतर उदक, उसांचा रस अथवा आंब्याचा रस, किंवा द्राक्षांचा रस, तूप, दूध, दही ह्या पदार्थांनीं

स्नान घालून, मग सुगंधि पदार्थांची उटणी लाऊन, पूर्वी स्थापन केलेल्या कलशांतील जलानें स्नान घालावें. नंतर गंध, जल, अक्षता वगैरे पदार्थांनीं पूजा करून व नित्यवंदनाविधीनें नमस्कार करून, प्रभूचें ध्यान करावें.

यज्ञान्तरोपदेशार्थमाह—

अन्यदेवताच्या पूजनाविषयीं सांगतात.

सम्यग्गुरूपदेशेन ।
सिद्धचक्रादि चार्चयेत् ॥
श्रुतं च गुरुपादाँश्च ।
को हि श्रेयसि तृप्यति ॥ २३ ॥

टीका—अर्चयेच्चासौ । किं तत् सिद्धचकादि सिद्धचकं लघु बृहद्वा आदिशब्देन पार्श्वनाथयन्त्रं गणधरवलयं सारस्वतयन्त्रमन्यद्वा सम्यक्त्वसंयमाविरोधेन दृष्टादृष्टफलप्रसादकत्वेन जिनशासने प्रसिद्धं । एतच्च रहस्यभावात्पदस्थध्यानप्ररूपणावसरे प्रपंचयिष्यते । केन तत्पूजयेत् सम्यग्गुरूपदेशेन अन्यथा नैष्फल्यप्रत्यवायबाहुल्यसम्भवात् । तथा श्रुतमर्चयेत् । गुरोश्च दीक्षकाचार्यस्य पादान् तृतीयोऽपि चशब्दस्त्रयाणामपि पूज्यानां तुल्यकक्षतासूचनार्थं । कुत एतद्यज्ञान्तरप्रदर्शनं ? जिनयज्ञेनैव सर्वमनोरथपरिपूर्तिसंसिद्धेरिति शङ्कायामिदमाह— को हीत्यादि । हि यस्मात् कस्तृप्यति तृप्तमात्मानं मन्यते । कस्मिन् श्रेयसि अभ्युदयनिःश्रेयससाधनार्थे कर्मणि ॥

अर्थ— गुरूनें केलेल्या सम्यगुपदेशाप्रमाणें सिद्धचक्र वगैरे ( सिद्धचक्र, पार्श्वनाथयंत्र, गणधरवलय, सारस्वतयंत्र व जिनशास्त्रांत सांगितलेल्या दुसऱ्या ऐहिक

व पारलौकिक फल देणाऱ्या देवता) ह्यांचें पूजन करावें. तसेंच शास्त्र व गुरुचरण ह्यांचेंही पूजन करावें. येथें—श्रीजिनपूजनानेंच मनोरथसिद्धि होत असतां इतर देवतांच्या पूजनाचा विधि करण्याचें प्रयोजन काय? अशी—शंका येते. परंतु, ती बरोबर नाहीं. कारण, ज्यापासून ऐहिक व पारलौकिक दोन्ही प्रकारचें कल्याण व्हावयाचें अशा व्यापारांविषयीं शहाणा पुरुष 'पुरें', अशी बुद्धी धारण करील काय?

ततः पात्राणि सन्तर्प्य ।
शक्तिभक्त्यनुसारतः ॥
सर्वांश्चाप्याश्रितान् काले ।
सात्म्यं भुञ्जीत मात्रया ॥ २४ ॥

टीका—ततो जिनयज्ञादिनिर्वर्तनानन्तरं पात्रसन्तर्पणादि कृत्वा भुञ्जीत अश्नीयादसौ । किं तत् सात्म्यं वस्तु । सात्म्यलक्षणं यथा "पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि । सुखित्वायावकल्पंते तत्सात्म्यमिति कथ्यते" कया भुञ्जीत मात्रया सुखजरणलक्षणया यदाह— सायं प्रातर्वा वह्निमनवसादयन् भुञ्जीतेति । अपि च गुरूणामर्धसौहित्यं लघूनां नातितृप्तता । मात्राप्रमाणं निर्दिष्टं सुखं तावद्विजीर्यति ॥ क मात्रया सात्म्यं भुञ्जीत? काले बुभुक्षा-काले । भोजनकालः तद्विस्तरशास्त्रं त्विदं— प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे । विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ॥ तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ, प्रयुञ्जीताहारं विधिनियमितं कालः स हि मतः ॥ १ ॥ किं कृत्वा सन्तर्प्य सम्यक् प्रीणयित्वा । कानि पात्राणि प्रागुक्तलक्षणानि । कथं

ततस्तदनन्तरं । कस्मात् शक्तिभक्त्यनुसारतः शक्तिभक्त्योरनतिक्रमेण । न केवलं पात्राणि सन्तर्प्य सर्वानप्याश्रितांश्च तिरश्चोऽपि स्वयं परिगृहीतान् सन्तर्प्य सन्तोष्येत्यर्थः । कालविशेषोपदेशेन च माध्याह्निकदेवपूजाभोजनयोर्नास्ति काल नियम इति बोधयति । तीव्रबुभुक्षा हि मध्याह्नादर्वागपि गृहीतप्रत्याख्यानं तिरयित्वा देवपूजादिपूर्वकं भोजनं कुर्वन् न दुष्यति ॥

अर्थ—मग आपली शक्ति व भक्ति ह्यांस अनुसरून, ' मागें सांगितलेल्या गुणांनीं युक्त असलेल्या, अतिथींना अन्नदानानें तृप्त करून व आपल्या आश्रयास असलेल्या मनुष्य, पशु, पक्षी इत्यादिकांसही तृप्त करून, तीव्र क्षुधा लागल्या वेळीं, जे पदार्थ आपल्यास सोसत असतील ते पदार्थ, पीडा न होईल अशा प्रमाणानें भक्षण करावेत. ( ह्या श्लोकांत भोजनाचा काल, 'तीव्रक्षुधा लागेल तो ' असा सांगितला आहे. त्यावरून तीव्रक्षुधा उत्पन्न झाली असतां मध्यान्हकालाची वाट पहात राहिलें पाहिजे, असें होत नाहीं. कारण मध्यान्हाच्या पूर्वी देखील तीव्रक्षुधा उत्पन्न होण्याचा संभव आहे. या करितांच 'तीव्रक्षधा लागल्या वेळीं ' भोजन करण्यास सांगितलें आहे. वरील श्लोकावरून जिनपूजनाच्या पूर्वी भोजन करूं नये एवढें मात्र सिद्ध होतें. ह्यावरून, तीव्रक्षुधा उत्पन्न झाली असतां, जिनपूजन करून व अतिथीस अन्नदान करून, केव्हांही भोजन करणेस दोष नाहीं, असें सिद्ध होतें. )

लोकद्वयाविरोधीनि ।
द्रव्यादीनि सदा भजेत् ॥

यतेत व्याध्यनुत्पत्ति- ।
च्छेदयोः स हि वृत्तहा ॥ २५ ॥

टीका—भजेत् सेवेतायं । कानि द्रव्यादीनि द्रव्यक्षेत्रकालभावकर्मसहायादीनि । किंविशिष्टानि लोकद्वयाविरोधीनि इहलोके परलोके च पुरुषार्थानुपघातकानि । क सदा सर्वदा तथा यतेत तात्पर्यं कुर्यात् । कयोर्व्याध्यनुत्पत्तिच्छेदयोः व्याधेः ज्वरादिरोगस्यानुत्पत्तावप्रादुर्भावे छेदे च निवर्तने । कुत इत्याह— हि यस्मात् । भवति । कोऽसौ स व्याधिः । कथम्भूतो वृत्तहा संयमस्य हन्ता ॥

अर्थ—ह्या लोकीं व परलोकीं पुरुषार्थाचा नाश न करणारे असेच द्रव्य, काल, क्षेत्र, भाव, कर्म व सहाय इत्यादि पदार्थ सर्वदा उपयोगांत आणावेत. आणि व्याधी उत्पन्न न होऊं देणें व उत्पन्न झालेला व्याधि दूर करणें ह्याविषयीं सर्वदा प्रयत्न करावा. कारण कोणताही व्याधि संयमाचा नाश करतो.

तदुत्तरकरणीयनिर्णयार्थमाह—

त्यानंतर काय करावें हें समजण्याकरितां सांगतात.

विश्रम्य गुरुसब्रह्म- ।
चारिश्रेयोऽर्थिभिः सह ॥
जिनागमरहस्यानि ।
विनयेन विचारयेत् ॥ २६ ॥

टीका—ततश्च विचारयेत् इदमित्थं भवति न वेति सम्प्रधारयेदसौ । गुरुमुखात् श्रुतान्यपि शास्त्ररहस्यानि परिशीलनाविकलानि न चेतसि सुदृढप्रतिष्ठानि भवन्तीति मनसि कृत्वा । कानि

जिनागमरहस्यानि अर्हत्सिद्धान्तस्यैदम्पर्याणि । केन विनयेन प्रश्रयेण । कथं सह कैः गुर्वादिभिः । किं कृत्वा विश्रम्य भोजनश्रममपनीय । गुरवोऽत्र शास्त्रोपदेष्टारः । सब्रह्मचारिणः । सहाध्यायिनः श्रेयोऽर्थिन आत्महितकामाः ॥

अर्थ—नंतर थोडी विश्रांति घेऊन शास्त्रोपदेश करणारा गुरु, आपला सहाध्यायी व आत्म्यास मुक्ति प्राप्त व्हावी असें इच्छिणारे लोक ह्यांच्याशीं सह जिन शास्त्रांतील सिद्धांताचा नम्रपणानें विचार करावा.

ततश्च—

सायमावश्यकं कृत्वा ।
कृतदेवगुरुस्मृतिः ॥
न्याय्ये कालेऽल्पशः स्वप्या- ।
च्छक्त्या चाब्रह्म वर्जयेत् ॥ २७ ॥

टीका—स्वप्यात् शयीतासौ । कियत् अल्पशः अल्पं । क काले । किंविशिष्टे न्याय्ये न्यायादनपेते । न्यायश्च कालो रात्रेः प्रथमयामोऽर्द्धरात्रं वा शरीरसात्म्येन अल्पश इति च विशेषणमिति विधिः । सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इतिन्यायात् । स्वप्यादिति च विशेष्यं । न च तत्र विधिर्दर्शनावरणीयकर्मोदयेन स्वापस्य स्वतःसिद्धत्वात् । अल्पमपि च प्रशस्तं यथा भवति तथा स्वप्यादिति शसा द्योत्यते । तेन रोगमार्गश्रमादौ बह्वपि स्वप्यादिति विधिः । किंविशिष्टः सन् कृतदेवगुरुस्मृतिः कृता देवस्यार्हतो गुरूणां च तदुपदेष्टॄणां च स्मृतिर्मनस्यारोपणं येन स तथोक्तः । किं कृत्वा कृत्वा किं तत् आवश्यकं देवार्चनं भमिकौचित्त्येन च सामयिकादिषट्कं ।

कदा सायं संध्यासमये । तथा वर्जयेदसौ । किं तत् अब्रह्म मैथुनं । कया शक्त्या आत्मनः संयमसामर्थ्येन । उपलक्षणं चैतत् तेन यावन्न सेव्या विषयास्तावत्ताना प्रवृत्तितो व्रतयेदिति वचनाद्भोगादिनियमं विना क्षणमपि स्थातुं न युक्तमिति स्मारयति ॥

**अर्थ—सायंकाळीं अवश्य करणेचें सामायिक वगैरे करून गुरु आणि देव ह्यांचें स्मरण करून, योग्य वेळीं थोडीशी निद्रा करावी. तसेंच अंतःकरणाच्या नियमनाच्या शक्तीस अनुसरून मैथुन वर्ज करावें.**

अथ परिणतायां रात्रौ निद्राच्छेदे सति निर्वेदादिभावनां कुर्यादित्युपदेशार्थं सप्तदश श्लोकानाह—

**आतां; उत्तररात्रीं निद्रा पूर्ण होऊन जागृत झाल्यावर वैराग्याचा अभ्यास करावा असा उपदेश करण्याकरितां पुढील श्लोक सांगतात.**

**निद्राच्छेदे पुनश्चित्तं ।**
**निर्वेदेनैव भावयेत् ॥**
**सम्यग्भावितनिर्वेदः ।**
**सद्यो निर्वाति चेतनः ॥ २८ ॥**

**टीका—**भावयेत् संस्कुर्यादसौ । किं तत् चित्तं मनः । केन निर्वेदेन संसारशरीरविषयवैराग्येण । न पुनरर्थादिचिन्तयेत्येवशब्दार्थः । क्व सति निद्राच्छेदे स्वापनिवृत्तौ । पुनःशब्दो विशेषार्थः । यतो निर्वाति प्रशमसुखमनुभवति । कोऽसौ चेतन आत्मा । कथं सद्यस्तत्क्षण एव । किंविशिष्टः सन् सम्यग्भावितनिर्वेदः यथावदभ्यस्तवैराग्यः ॥

अर्थ—निद्रा समाप्त झाली असतां, विशेषतः अंतःकरण वैराग्यानेंच संस्कृत करावें. ह्मणजे मनाला वैराग्यचिंतनाची संवय लावावी. कारण, वैराग्याचा ज्यानें चांगला अभ्यास केला आहे असा आत्मा, त्याच वेळीं शांतिसुखाचा अनुभव करतो.

संसारनिर्वेदार्थमाह—

आतां; संसाराच्या विरक्तीबद्दल सांगतात.

दुःखावर्ते भवाम्भोधा- ।
वात्मबुध्याऽध्यवस्यता ॥
मोहाद्देहं हहाऽऽत्माऽयं ।
बुद्धोऽनादि मुहुर्मया ॥ २९ ॥

टीका—हहा कष्टं । बद्धो ज्ञानावरणादिकर्मपरतंत्रीकृतः । कोऽसावयं स्वसंदेनवेद्य आत्मा जीवः । केन मया आत्मना । कथं मुहुर्वारंवारं । कथमनादि आदिरहितं । किं कुर्वता अध्यवस्यता निश्चिन्वता । कं देहं । कया आत्मबुध्या देह एवाहमिति संकल्पेन । कस्मात् मोहात् अविद्यासंस्कारात् । क्व भवाम्भोधौ संसारसागरे । किंविशिष्टे दुःखावर्ते दुःखानि नारकादिभववेदना आवर्ता जलभ्रमणानीव अनियतोत्थायत्वाद्दुर्निवारत्वाच्च यत्र स दुःखावर्तस्तस्मिन् ॥

अर्थ—अनेक प्रकारचीं दुःखें हीं ज्यांत भोंवऱ्याप्रमाणें आहेत अशा ह्या संसाररूपी समुद्रांत अज्ञानामुळें देहास आत्मा असें मानणारा ( देह हाच आत्मा असें समजणारा ) अशा माझ्या कडून; हा आत्मा अनादि-

कालापासून वारंवार ज्ञानावरणादि कर्मांनीं बद्ध केला गेला ! हें फार वाईट झालें !!!

तदिदानीं किं करोमीत्याह—

तदेनं मोहमेवाह- ।
मुच्छेत्तुं नित्यमुत्सहे ॥
मुच्येतैतत्क्षये क्षीण- ।
रागद्वेषः स्वयं हि ना ॥ ३० ॥

**टीका**—तत्तस्मादुत्सहे प्रयते अहं । किं कर्तुमुच्छेत्तुं क्षपयितुं कमेनं प्रतीयमानं । मोहमज्ञानं । न देहादिकमित्येवशब्दार्थः । कथं नित्यं सन्ततं । हि यस्मात् मुच्येत मुक्तो भवेत् । कोऽसौ ना पुरुषो न प्रधानादिकं । किंविशिष्टः सन् क्षीणरागद्वेषः । कथं स्वयमात्मना प्रयत्नमन्तरेणैव । क सति एतत्क्षये मोहापगमे सति मोहमूलत्वाद्रागद्वेषयोः ॥

**अर्थ**— ह्मणून, मी ह्या अज्ञानाचा नाश करण्याकरितांच नेहमीं उद्योग करतों ! कारण त्या अज्ञानाचा नाश झाला असतां, ज्याचे रागद्वेषादि कषाय क्षीण झाले आहेत असा हा आत्मा, आपोआपच मुक्त होईल.

इदानीं बन्धमूलामनर्थपरम्परां परामृशन् पुनर्बन्धानुबन्धिनं विषयसेवाभिनिवेशं संहर्तुं प्रतिज्ञां करोति—

आतां; बंधापासून होणाऱ्या अनर्थांचा विचार वरीलप्रमाणें होऊं लागला, ह्मणजे मग त्या बंधास कारण असलेल्या विषयसेवनाचा त्याग करण्याची प्रतिज्ञा जीव करितो, असें सांगतात.

बन्धाद्देहोऽत्र करणा- ।
न्यैतैश्च विषयग्रहः ॥
बन्धश्च पुनरेवात- ।
स्तदेनं संहराम्यहम् ॥ ३१ ॥

टीका— भवति कोऽसौ देहः शरीरं कस्मात् बन्धात् पुण्यपापात्मककर्मविपाकात् । अत्र च देहे भवन्ति । कानि करणानि स्पर्शनादीन्द्रियाणि । भवति च कोऽसौ विषयग्रहः स्पर्शाद्यर्थपरिच्छेदग्रहः । कैः एतैः करणैः । तथा भवति कोऽसौ बन्धः शुभाशुभकर्मपुद्गलादानं । कस्मात् अतः विषयग्रहात् कथं पुनरेव भूयोऽपि । यत एवं तत्तस्मात् संहरामि निर्मूलयाम्यहं । कं एनं बन्धमूलं विषयग्रहम् ॥

अर्थ— पापपुण्यात्मककर्मापासून देह प्राप्त होतो, ह्या देहांत इंद्रियें असतात, त्यांच्या योगानें विषयग्रहण होतें, आणि त्या विषयग्रहणामुळें पुनः आत्म्यास पापपुण्यात्मककर्माचा बंध होतो. ह्मणून मी त्या विषयवासनेचाच निर्मूळ नाश करतो.

विषयेष्वपि योषिदभिलाषस्यान्त्यन्तं दुर्निवारत्वात् तन्निग्रहोपायमनुचिन्तयन्नाह—

त्या विषयवासनेच्या त्यागाचा उपाय मनांत कल्पून (जीव) ह्मणतो.

ज्ञानिसङ्गतपोध्यानै- ।
रप्यसाध्यो रिपुः स्मरः ॥

देहात्मभेदज्ञानोत्थ-
वैराग्येणैव साध्यते ॥ ३२ ॥

**टीका**—साध्यते निगृह्यते। कोऽसौ स्मरः मैथुनसंज्ञासंस्कारोद्बोधः। किंशिविष्टो रिपुः ऐहिकामुत्रिकपुरुषार्थभ्रंशहेतुतयाऽपकर्ता केन कर्त्रा करणेन वा देहेत्यादि देहश्चौदारिकादिशरीरत्रयं। आत्मा जीवानंदमयः पुमान् देहश्च आत्मा च देहात्मानौ तयोर्भेदेन पृथक्त्वेन भेदस्य वा ज्ञानं प्रतिपत्तिस्तस्मादुत्था उत्थानमुद्भवो यस्य तद्देहात्मभेदज्ञानोत्थं तच्च तद्वैराग्यं च भवाङ्गभोगनिर्वेदः उपेक्षा वा तेनैवापदीष्यादिसमुत्थेन वैराग्येणात्मावमाननलक्षणेन। किंविशिष्टोऽसौ असाध्यः साधयितुमशक्यो व्यभिचारदर्शनात्। कैः ज्ञानिसंगतपोध्यानैः ज्ञानिनामात्मदर्शिनां संगः संसर्गो ज्ञानिसंगः, तपः कायक्लेशादिलक्षणमाचरणं, ध्यानं पदपदार्थादिचिन्तनं, ज्ञानिसङ्गश्च तपश्च ध्यानं च ज्ञानिसङ्गतपोध्यानानि तैर्व्यस्तैः समस्तैर्वा बाह्यलोकानां कन्दर्पशत्रुनिग्रहकत्वेन प्रसिद्धेः। अपिर्विस्मये।

**अर्थ— ज्ञानी जीवांचा समागम, तप, ध्यान ह्यांच्या योगानेंही ताब्यांत ठेवण्यास अशक्य असा कामरूपी शत्रु "देह व आत्मा हे दोनी भिन्न आहेत" अशा प्रकारच्या ज्ञानापासून उत्पन्न झालेल्या वैराग्यानेंच ताब्यांत ठेवितां येतो.**

आत्मदेहान्तरज्ञानार्थितया सन्यस्तसमस्तसङ्गानां प्राचां श्लाघापूर्वकमात्मानं कलत्रमात्रत्यागेऽप्यसमर्थं गर्हमाणः प्राह—

**आतां; तो जीव, आत्मा व देह ह्यांतील भेद समजावा अशी इच्छा असल्यामुळें ज्यांनीं सर्वसंगपरित्याग केला**

आहे, अशा प्राचीन लोकांची स्तुति करून, केवल स्त्रीचाही त्याग करण्यास असमर्थ असलेल्या आपली निंदा करणारा होतसाता ह्मणतो.

धन्यास्ते येऽत्यजन् राज्यं ।
भेदज्ञानाय तादृशम् ॥
धिङ्मादृशकलत्रेच्छा- ।
तंत्रगार्हस्थ्यदुस्थिःतान् ॥ ३३ ॥

टीका—ते भरतसगरादयो भवन्ति । किंविशिष्टाः धन्याः तपःश्रुताभ्यासात्मसात्कृत–सुकृतविशेषफलोपभोगान्ते, सुदुस्त्यजसाम्राज्यलक्ष्मीपरित्यागितया महतामपि श्लाघ्याः । ये किं ये अत्यजन् जरत्तृणमिव त्यक्तवन्तः । किं तत् राज्यं किंविशिष्टं तादृशं पूजार्थाज्ञैश्वर्यवीर्यपरिजनकामभोगादिभिर्भुवनत्रयातिशायि । कस्मै भेदज्ञानाय देहात्मव्यतिरेकबोधार्थं । इदानीमात्मदृष्टान्तेन विषयाभिलाषपरतंत्रतया दोषभूयिष्ठं गार्हस्थ्यं जानतोऽपि त्यक्तुमशक्ताँस्तिरस्कुर्वन्नाह— धिगित्यादि । धिक् निन्दामीत्यर्थः । कान् मादृशः अहमिव दृश्यन्ते विषयाशावशवर्तितयोपलभ्यन्त इति मादृशः । मया सदृशानाविर्भूततत्वज्ञानत्वेऽपि विषयोपभोगपरित्यागासमर्थान् । किंविशिष्टान् यतः कलत्रेच्छेत्यादि । कलत्रस्य भार्याया इच्छा मनोरथः छन्द इति यावत् कलत्रेच्छा सैव तन्त्रं प्रधानं यत्र तत्कलत्रेच्छातन्त्रं अथवा कलत्रे इच्छा अभिलाषः कलत्रेच्छा तस्यां तन्त्रमायत्तं कलत्रेच्छातन्त्रं तदधीनवृत्ति गृहस्थस्य नित्यनैमित्तिकानुष्ठानस्थस्य द्वितीयाश्रमिणो भावः कर्म वा गार्हस्थ्यं । कलत्रेच्छातन्त्रं च तद्गार्हस्थ्यं च कलत्रेच्छातन्त्रगार्हस्थ्यं तेन दुःस्थिता दुरवस्था विविधदुराधिबाधाकुलितास्तान् । हेतुपरत्वेनायं निर्देशः ॥

अर्थ— देह व आत्मा ह्यांमधील भेदज्ञान होण्याकरितां सर्वसुखांस अनुकूल असलेलें राज्य देखील सोडिते झाले; ते भरत सगर वगैरे राजे फार धन्य होत! आणि माझ्याप्रमाणें स्त्रीविषयक इच्छेच्या स्वाधीन असलेल्या ( स्त्रीवांचून ज्याचें आचरण होत नाहीं अशा ) गृहस्थाश्रमांत दुःख भोगणाऱ्यास धिक्कार असो !!

स्वयमभिलाष्यमाणाया उपशमश्रियः स्त्रियाश्चात्माकर्षणविषये बलाबलं चिन्तयति—

आपण स्वतः इच्छिलेली शांति व स्त्री ह्या दोहोंपैकीं आपल्यास वश करण्यासंबंधानें कोणतीचें बल चालेल व कोणतीचें चालणार नाहीं, ह्याविषयीं विचार सांगतात.

इतः शमश्रीः स्त्री चेतः ।
कर्षतो मां जयेन्नु का ॥
आ ज्ञातमुत्तरैवात्र ।
जेत्री या मोहराट्चमूः ॥ ३४ ॥

टीका—कर्षतः स्वस्याभिमुखं नयतो द्वे । कं मां अतीन्द्रियैन्द्रियकसुखविशेषज्ञं । तत्र तावत् कर्षति । काऽसौ शमश्रीः प्रशमसुखसम्पत् । कं मां । क्व इतः अस्मिन्नेकस्मिन्पक्षे । तथा कर्षति । स्त्री मां । क्व इतोऽन्यस्मिन्पक्षे । नुर्वितर्के । अनयोः का कतरा जयेत् मदाकर्षणे बलवती भवेत् । संशयोऽत्र मे । अथवा आः स्मृतमाप्तोपदेशबलादनुभूतमेतयोर्बलाबलम् । सम्प्रत्यपि ज्ञातं निश्चितं । यदि वा आः संतापप्रकोपयोर्न्याख्येयः । आद्यपक्षे भविष्यति । काऽसौ अत्र एतयोर्मध्ये । उत्तरैव स्त्री

न शमश्रीः । किंविशिष्टा जेत्री मदाकर्षणे शमश्रियोऽभिभवित्री न स्त्रियाः शमश्रीः । या किं या निश्चिता मया । किंविशिष्टा मोहराट्चमूः मोहोऽत्र चारित्रावरणोदयः स एव राट् राजा अधृष्यभावत्वात् मोहराजश्चमूः सेना । यथा राजा प्रतापित्वेन प्रतिपक्षं सेनया जयति तथा मोहस्त्रियेति भावः ॥

अर्थ— मला एकीकडे शांति ओढत आहे व एकीकडे स्त्री ओढत आहे, तेव्हां ह्या दोहोंत कोण बरें जय पावेल? हं! आप्तांच्या उपदेशानें मला असें आठवतें कीं- ह्या दोहोंतील दुसरी ( स्त्री ) हीच जिंकणारी आहे. कारण, ती मोहरूपी राजाच्या सैन्यापैकीं आहे.

कलत्रदुस्त्यजत्वं भावयति—

स्त्रीचा त्याग करणें फार कठीण आहे असें सांगतात.

चित्रं पाणिगृहीतीयं ।
कथं मां विष्वगाविशत् ॥
यत्पृथग्भावितात्माऽपि ।
समवैम्यनया पुनः ॥ ३५ ॥

टीका--चित्रं यस्याः खलु पाणिर्गृह्यते सा । कथं सर्वात्मना ग्राहकात्मानं प्रविशतीति विस्मयो मे । कथं केन प्रकारेण । आविशत् प्रविष्टा । काऽसौ इयं दृश्यमाना पाणिगृहीती परिणीतस्त्री । कं मां परिणेतारं । कथं विष्वक् समन्तात् मामात्ममयं कृतवतीत्यर्थः । अत्रोपपत्तिमाह—यद्यस्मात् । समवैमि तादात्म्यं प्रतिपद्ये अहं । कथं सह । कया अनया अहमेवेयमियमेवाहमित्यभेदाध्यवसायपरिणतो भवामीत्यर्थः । कथं पुनर्भूयः । किंविशिष्टोऽपि

सन् पृथग्भावितात्माऽपि पृथगेतस्या भेदेन इयमन्या अहमन्य इति कोऽनया सह ममाभेदप्रत्यय इति तत्वज्ञानेन भावितो मुहुर्मुहुश्चिन्तित आत्मा अहंकारास्पदमन्तस्तत्त्वं येन स तथोक्तः । किं पुनर्मोहवशादभेदभावनापरिणत इत्यपिशब्दार्थः ॥

**अर्थ— हें मोठें आश्चर्य आहे कीं; जिचें मीं पाणिग्रहण केलें आहे अशी ही माझी स्त्री माझ्या आत्म्यांत सर्वत्र कशी बरें प्रवेश करती झाली? कारण, हिच्यापासून मी निराळा आहे असा विचार ज्याला आहे असा देखील मी, पुनः हिच्याशीं तादात्म्य पावत आहे !!**

स्त्रीनिवृत्तिमात्मनो निरूप्य वित्तमुपपत्त्या प्रतिक्षिपन्नाह—

**ह्याप्रमाणें विचार करून स्त्रीपासून अंतःकरण निवृत्त झाल्यावर मग द्रव्याची इच्छा होणें योग्य नाही, असें युक्तीनें सांगतात.**

**स्त्रीतश्चित्त निवृत्तं चे- ।**
**न्ननु वित्तं किमीहसे ॥**
**मृतमण्डनकल्पोऽहि ।**
**स्त्रीनिरीहे धनग्रहः ॥ ३६ ॥**

टीका—चेदिति पराभिप्रायद्योतने । हे चित्त अंतःकरण । यदि निवृत्तं विवेकबलाद्व्यावृत्तं । किं तत् कर्तृ त्वं । कस्मात् स्त्रीतः स्त्रियाः सकाशात् । स्त्रियं नेच्छामीत्यभिप्रैषि यदि त्वमित्यर्थः । ननुरमर्षे न मृष्याम्यहमिमं त्वदभिप्रायमित्यर्थः । तदा किमिति प्रश्नाक्षेपे तदा किमीहसे किं वाञ्छासि त्वं हे चित्त । किं तद्वित्तं धनं । स्त्रीनिवृत्तस्य धनमिच्छतः किमनुपपन्नमित्यत्राह— हि यस्मात्

भवति । कोऽसौ धनग्रहः द्रविणार्जनरक्षणवर्जनाभिनिवेशो धनस्वीकारो वा । किंविशिष्टो मृतमण्डनकल्पः मृतस्य मण्डनमिव । क स्त्रीनिरीहे स्त्रियां निःस्पृहे । यथा मृतकशरीरे क्रियमाणं मण्डनं तद्भोक्तुरभावान्निष्फलं तथा स्त्रियादिविषयविमुखस्य परिगृह्यमाणं धनमिति भावः । धनस्य हि विषयसुखसाधनं फलत्वेन प्रसिद्धं । तत्र च कामिन्यालम्बनविभावत्वेन मुख्या सौधोद्यानादयश्चोद्दीपनविभावत्वेन गौणाः यस्य च नास्ति स्त्रियामभिलाषस्तस्य किमितरविषयैरिति ॥

अर्थ— हे मना ! तूं जर स्त्रीपासून परतलेलें आहेस; तर मग, द्रव्याची इच्छा कां करित आहेस ! कारण, स्त्रीविषयीं निरिच्छ झाल्यावर द्रव्याची इच्छा करणें हें प्रेतावर अलंकार घातल्याप्रमाणें व्यर्थ आहे. तात्पर्य, ज्याचा स्त्रीविषयीं अभिलाष नाहीं, त्याला बाकीचे सर्व विषय व्यर्थ आहेत.

एवं निर्वेदं भावयतः परमसामायिकभावनार्थं सप्तश्लोकीमाह—

ह्याप्रमाणें वैराग्यभावना करणाऱ्यानें उत्तमप्रकारें सामयिकक्रिया करावी, ह्याविषयीं सात श्लोकांनीं सांगतात.

इति च प्रतिसन्दध्या- ।
दुद्योगं मुक्तिवर्त्मनि ॥
मनोरथा अपि श्रेयो- ।
रथाः श्रेयोऽनुबन्धिनः ॥ ३७ ॥

टीका—प्रतिसन्दध्यात् पुनः संयोजयेदसौ । कमुद्योगमुत्साहं । क मुक्तिवर्त्मनि मोक्षमार्गे । कथं इति वक्ष्यमाणेन प्राणकायबलास्थिरत्वाद्यनुचिन्तनलक्षणेन प्रकारेण । चः समुच्चये । न

केवलं संसारादिनिर्वेदं तथा भावयेदित्थं मोक्षमार्गेऽभियोगं च प्रतिसन्दध्यादित्यर्थः । अनाचरणतो मनोरथाः स्वप्नराज्यसमाः इति विप्रतिपन्नं बोधयितुमिदमाह— यतो भवन्ति के मनोरथाः अशक्यप्राप्त्यर्थविषयाभिलाषाः । किं पुनस्तदर्थानुष्ठानप्रवृत्तय इत्यपिशद्बार्थः । कीदृशा भवन्ति श्रेयोऽनुबन्धिनो भवे भवे अभ्युदयसम्पादिनः प्रभूतपुण्यबन्धनिबन्धनत्वात् । किमाश्रितास्ते तथा भवन्तीत्याह— श्रेयोरथाः श्रेयो निःश्रेयसं रथः स्यंदनो येषां ते श्रेयोरथाः मोक्षरूढा इत्यर्थः तदुक्तं— यत्र भावः शिवं धत्ते द्यौः कियद्दूरवर्तिनीति ॥

अर्थ— आणि मोक्षमार्गाविषयीं पुढें सांगितल्याप्रमाणें उद्योगाची वारंवार भावना करावी. येथें— जर मनांत आल्याप्रमाणें आचरण होत नाहीं, तर उगीच भावना ( मनोरथ ) करून काय उपयोग आहे— अशी शंका येते. तिच्या निरासाकरितां सांगतात— ज्यांपासून मोक्षप्राप्ति होणार आहे अशा कर्मांविषयींचे मनोरथ देखील प्रत्येक जन्मांत कल्याण करणारेच असतात.

तत्रायुःकायमयत्वाज्जीवितस्य तदपायानुध्यानमुखेन जीवितव्योच्छेदं भावयन्प्रौढयोक्त्या स्वार्थसिद्धिभ्रंशं भावयति—

आतां जीवित ह्म० ' आयुःकर्म व शरीर ह्या दोहोंचा संबंध ' असें असल्यानें त्या दोहोंस अपाय झाल्यानें जीविताचा नाश होतो हें दाखवून त्यामुळें आपल्या इष्टसिद्धीचाही नाश होतो असें दाखवितात.

क्षणे क्षणे गलत्यायुः ।
कायो ह्रसति सौष्टवात् ॥

ईहे जरां नु मृत्युं नु ।
सध्रीचीं स्वार्थसिद्धये ॥ ३८ ॥

टीका—गलति क्षीयते एकदेशेनापगच्छति । किं तत् आयुः भवधारणकारणं कर्म । क्व क्षणे क्षणे प्रतिक्षणं । तथा ऱ्हसति देशतश्च्यवति । कोऽसौ कायः शरीरं । कस्मात् सौष्टवात् स्वार्थक्रियाकरणसामर्थ्यात् । क्षणे क्षणे इत्यत्रापि योज्यं । नुर्वितर्के । किमर्थं । तत्किमीहे वाञ्छाम्यहं । कां जरां सर्वांगशक्तिक्षपणलक्षणां विस्रसां । किं वा मृत्युं निःशेषायुःक्षयलक्षणं मरणं । किंविशिष्टां सध्रीचीं आत्मनः सहायभूतां । कस्यै स्वार्थसिद्धये स्वाभिप्रेतार्थनिष्पत्त्यर्थं । पुरुषार्थसाधके ह्यायुः कायश्च प्रधानं कारणं । तच्च प्रतिक्षणं विशरारुतया निश्चितं चेत्सर्वथा पुरुषार्थभ्रंशहेतुतया प्रसिद्धाभ्यां जरामृत्युभ्यां तत्संभाव्येतेति वक्रभणित्या चोदयति ॥

अर्थ— प्रत्येक क्षणीं आयुष्य नाश पावत आहे आणि शरीर हें सामर्थ्यानें कमी होत आहे ह्मणून मी इष्टाच्या प्राप्तीस सहाय करणाऱ्या वृद्धपणाची इच्छा करावी ! किंवा मृत्यूची इच्छा करावी !! ह्यांतील तात्पर्य असें— आयुष्य व शरीर हीं दोन कोणत्याही पुरुषार्थाचीं मुख्य साधनें आहेत, आणि तीं तर स्वतःच विनाशिस्वभावाचीं आहेत, ही गोष्ट जर सिद्ध आहे, तर, पुरुषार्थाची प्राप्ति कशी होणार ? केव्हांही होणार नाहीं. ह्मणून वृद्धपणा व मृत्यू ह्या दोहोंचीही इच्छा करणें योग्य नाहीं.

जिनधर्मसेवासहचारिणीरापदोऽभिनन्द्य तद्विरहभाविनीः सम्पदोऽपि प्रतिक्षिपन्संगत्यागे दार्ढ्यं भावयति—

आतां जिनधर्माचरणांत प्राप्त होणाऱ्या विपत्तीची स्तुति करून, व जिनधर्मत्यागानें प्राप्त होणाऱ्या संपत्तीचाही तिरस्कार करून परधर्मत्यागाविषयीं दृढ भावना दाखवितात.

क्रियासमभिहारोऽपि ।
जिनधर्मजुषो वरम् ॥
विपदां सम्पदां नासौ ।
जिनधर्ममुचस्तु मे ॥ २९ ॥

टीका— वरं भवतु सोऽपि श्लाघ्य इत्यर्थः । कोऽसौ क्रियासमभिहारः पौनःपुन्यं भृशत्वं वा । वरं सकृद्भवनं मंदत्वं चेत्यपिशब्दार्थः । कासां विपदां शारीरमानसदुःखानां परिषहोपसर्गाणां वा । कस्य मे मम । किंविशिष्टस्य सतो जिनधर्मजुषः जिनोक्तं जिनानुष्ठितं वा धर्मं शुद्धचिदानन्दरूपात्मपरिणतिलक्षणं प्रीत्या सेवमानस्य । न तु न पुनर्वरं कोऽसौ असौ क्रियासमभिहारः । कासां संपदां सर्वेन्द्रियार्थसुखसाधनानां विभूतीनां । कस्य मे । किंविशिष्टस्य सतो जिनधर्ममुचो यथोक्तजिनधर्मरहितस्य ॥

अर्थ—जिनधर्माचें आचरण करणाऱ्या अशा मला वारंवार जरी विपत्ति प्राप्त झाल्या, तरी बरें! परंतु जिनधर्माचा त्याग करणाऱ्या मला वारंवार संपत्ति प्राप्त झाली तरी बरी नव्हे!!

श्रमणकर्माभ्यासेन अन्यगम्यं सर्वत्र साम्यं कामयते—

यतिधर्माच्या अभ्यासानें सर्वत्र समबुद्धि प्राप्त करून घेण्याची इच्छा दाखवितात.

लब्धं यदिह लब्धव्यं ।
तच्छ्रामण्यमहोदाधिम् ॥
मथित्वा साम्यपीयूषं ।
पिबेयं परदुर्लभम् ॥ ४० ॥

टीका—लब्धं प्राप्तं तन्मया कलत्रसम्पदादिकं । यत् किं यल्लब्धव्यं प्राप्तव्यं मया धन्यैर्वा । क इह नृजन्मनि गृहाश्रमे वा । यत एवं कृतार्थोऽस्मि तत्तस्मात्पिबेयं अध्यात्ममनुभवेयं अहं । किं तत् साम्यपीयूषं सर्वत्र समत्वममृतामिव । किं कृत्वा मथित्वा अभ्यस्य । विलोड्य च । कं श्रामण्यमहोदाधिं श्रमणानां यतीनां कर्म मूलोत्तरगुणाचरणलक्षणं श्रामण्यं महोदधिरिव अनर्घ्यरत्नोत्पत्तिनिमित्तत्वात् दुरवगाहत्वात् दुर्गमपारत्वाच्च । इयमत्र भावना यथा किल सुरासुरैः क्षीरोदधिं विलोड्य तत उध्दृतममृतं पीतमिति श्रूयते तथा श्रामण्यं भावयित्वा उपेक्षालक्षणं चारित्रमहमात्मनि परिणमयितुमर्हामि । कीदृशं द्वयमपि परदुर्लभं परैर्जिनमार्गानभिज्ञैः सुरासुरवर्गैश्च लोकैर्लब्धुमशक्यं जिनसमयाभिज्ञैरपि वा । परमत्यर्थं दुर्लभं कतिपयैरेव तैरपि प्राप्यमित्यर्थः ॥

अर्थ—ह्या गृहस्थाश्रमांत जें मिळवावयाचें तें मीं मिळविलें आहे. ह्मणून आतां मूलोत्तरगुणाचरणरूपी यतिधर्मसमुद्राचें मंथन करून दुसऱ्यास प्राप्त होण्यास अशक्य असें समबुद्धिरूपी अमृत प्राशन करीन.

तदेव भूयो भावयति—

ही वरील भावना दृढ होण्याकरितां पुनः तीच दाखवितात.

पुरेऽरण्ये मणौ रेणौ ।
मित्रे शत्रौ सुखेऽसुखे ॥
जीविते मरणे मोक्षे ।
भवे स्यां समधीः कदा ॥ ४१ ॥

टीका—कदा कस्मिन्काले । स्यां भवेयं । भवितुमर्हाम्यहं भविष्यामीति वा । किंविशिष्टः समधीः तुल्यमनाः । क क पुरे प्रीतिकारणे चातुर्वर्ण्यसमृध्द्यधिष्ठाननगरे । तथा तद्विपरीते अरण्ये अटव्यां । एतयोर्द्वयोरपि रागद्वेषनिबन्धनयोरुपेक्षापरिणतः कदा भविष्यामीत्यर्थः । एवमुत्तरत्रापि योज्यं । तथा मणौ वज्रादिरत्ने । रेणौ रजसि । तथा मित्रे सुहृदि । शत्रौ चापकर्तरि । तथा सुखे आल्हादनाकारे । असुखे च दुःखे देहमनस्तापरूपे । तथा जीविते पुरुषार्थसिद्धिहेतावायुषि । मरणे च तद्विपरीते । तथा मोक्षे अनन्तसुखस्वरूपे । भवे च तद्विपरीते । अयमत्र विशेषः— पुरारण्यादिषु तुल्यमतित्वमन्यस्यापि भवेत् । असौ तु परमवैराग्योपगतो मोक्षभवयोरपि निर्विशेषमतित्वमर्थयते । मोक्षे भवे च सर्वत्र निस्स्पृहो मुनिसत्तम इति श्रुतेः ॥

अर्थ—नगर व अरण्य, रत्न व ढेंकूळ, मित्र व शत्रु, सुख आणि दुख, जगणें व मरणें तसेंच मोक्ष आणि संसार ह्यांविषयीं सारखीच ज्याची बुद्धि आहे असा मी केव्हां होईन !

यतिधर्मचर्याकाष्ठाधिरोहणमाशंसति—

यतिधर्माचरणाच्या परमावधीस चढण्याची इच्छा दाखवितात.

मोक्षोन्मुखक्रियाकाण्ड- ।
विस्मापितबहिर्जनः ॥
कदा लप्स्ये समरस- ।
स्वादिनां पंक्तिमात्मदृक् ॥ ४२ ॥

**टीका**—कदा कस्मिन्काले । लप्स्ये प्राप्स्याम्यहं । कां पंक्तिं लक्षणया सजातीयत्वं । केषां समरसस्वादिनां समरसं ध्यातृध्येयध्यानानामेकीभावे सत्यानन्दं स्वादयन्त्यभीक्ष्णं भूयोभूयोऽनुभवन्तीति समरसस्वादिनो घटमानयोगा निष्पन्नयोगा वा मुमुक्षवः समरसस्वादिनस्तेषां । किंविशिष्टः सन् आत्मदृक् आत्मदर्शी भवन् । कथम्भूतो भूत्वा मोक्षोन्मुखेत्यादि— मोक्षे अनन्तज्ञानादिचतुष्टयाविर्भावस्वभावे निःश्रेयसि उन्मुखाः अभिमुखाः उद्यतास्तेषां क्रियाकाण्डगुरुकुलोपासनक्लेशातापनादियोगकायक्लेशादि तेन विस्मापितोऽनन्यसम्भाव्यतया विस्मयं नीतो बहिर्जनो बहिरात्मलोको येन स तथोक्तः ।

**अर्थ**—मोक्षाच्या प्राप्तीकरितां आचरिलेल्या अनेक सत्कर्मांच्या योगानें ज्यानें बहिरात्मलोकांस आश्चर्यचकित केलें आहे असा व ज्याला आत्म्याचा साक्षात्कार झाला आहे असा मी समबुद्धीपासून उत्पन्न होणाऱ्या आनंदाचा अनुभव घेणाऱ्या मुनीच्या सजातीयत्वास केव्हां बरें प्राप्त होईन ! ह्मणजे मुनीसारखा केव्हां होईन !!

योगपरमकाष्ठामभिकांक्षति—

**योगाच्या पराकाष्ठेची इच्छा दाखवितात.**

शून्यध्यानैकतानस्य ।

स्थाणुबुध्याऽनडुन्मृगैः ॥
उद्धृष्यमाणस्य कदा ।
यास्यन्ति दिवसा मम ॥ ४२ ॥

टीका—कदा कस्मिन् योगाभ्याससमये । यास्यन्ति गमिष्यन्ति । के दिवसाः अहोरात्राः । कस्य मम तत्त्वज्ञानवैराग्यसंम्पन्नस्य । किंविशिष्टस्य सतः शून्यध्यानैकतानस्य निर्विकल्पसमाधिपरिणतस्य पुनः किं क्रियमाणस्य उद्धृष्यमाणस्य स्कन्धशृङ्गकण्डूयनगोचरीक्रियमाणस्य कैरनडुन्मृगैः अनड्वाहः उत्कृष्टपशवः मृगा अरण्यचारिणो हरिणाः अनड्वाहश्च मृगाश्च अनडुन्मृगास्तैः । कया स्थाणुबुध्या स्थाणुः सीमाद्यर्थं ऊर्ध्वस्थितकाष्ठविशेषः स्थाणुरिति च द्धिः कल्पना स्थाणुबुद्धिस्तया । यदा हि पुराद्बहिरहं कायोत्सर्गेण स्थास्यामि तदा स्वैरचारिणो वृषभादयः स्कन्धादिकण्डूत्याकुलितास्तत्कण्डयनाय मां स्थाणुरयमिति मन्यमानाः स्कन्धादिभिरुद्धृष्यन्ति । एवमरण्ये हरिणादयोऽपि । अहं पुनः पुरारण्ययोर्मुक्ताग्रहत्वेन तिष्ठन् शुद्धचिदानन्दमयं स्वात्मानमेवाधिवत्स्यामीति मनोरथोऽस्य महात्मनो लक्ष्यत इति ॥

**अर्थ—निर्विकल्पसमाधींत गढून गेलेला व त्यामुळें हें शुष्क काष्ठ आहे अशा बुद्धीनें अरण्यांतील बैल हरिण वगैरे पशु ज्याच्या अंगास आपलें अंग घांशीत आहेत अशा माझे दिवस केव्हां बरे जातील!**

महानिशायां पुराद्बहिः प्रोषधोपवासव्रतान् कायोत्सर्गस्थितानुपसर्गजयेन योगादचलितान्प्राच्यश्रावकान् प्रशंसयति—

**काळोख्याच्या रात्रीं देखील अरण्यांत राहून प्रोषधोपवासव्रत करून जे कायोत्सर्गानें राहिले आहेत, व सर्व**

प्रकारच्या उपसर्गास ज्यांनीं जिंकिलें व जे योगसमाधी-पासून केव्हांही प्रचालित होत नाहींत अशा प्राचीन श्राव-कांची स्तुति करितात.

धन्यास्ते जिनदत्ताद्या ।
गृहिणोऽपि न येऽचलन् ॥
तत्तादृगुपसर्गोप- ।
निपाते जिनधर्मतः ॥ ४४ ॥

टीका—वर्तन्ते । के ते प्रसिद्धाः । जिनदत्ताद्याः जिनदत्तो नाम श्रेष्ठी आद्यः प्रथमो येषां वारिषेणकुमारादीनां ते जिनदत्ताद्याः प्रोषधोपवासव्रातिनः । किंविशिष्टा धन्या सुकृतिनः तेभ्योऽहं स्पृहयामीत्यर्थः । ये किं ये नाचलन् न चलिताः । कस्मात् जिनधर्मतः जिनोक्ताज्जिनसेविताद्वा सामायिकात् किंविशिष्टाः सन्तो गृहिणो द्वितीयाश्रमिणः । किंपुनरुत्तराश्रमिण इत्यपिशद्बार्थः । क सति तादित्यादि ते श्रुतप्रसिद्धास्तादृशोऽनन्यसदृशा उपसर्गाः शस्त्रप्रहारादयस्तेषां उपनिपाते समीपे निपतनं नियत-मवश्यम्भावि पतनं तत्तादृगुपसर्गोपनिपातस्तस्मिन् ॥

अर्थ—ते जिनदत्त वगैरे श्रावक मोठे धन्य होत ! जे सागार असून देखील, प्रसिद्ध असलेले भयंकर उपसर्ग प्राप्त झाले असतांही जिनधर्मापासून भ्रष्ट झाले नाहींत !!

व्रतिकप्रतिमामुपसंहरस्तँदनुष्ठायिनः फलविशेषमाह—

आतां ; व्रतिक प्रतिमेची समाप्ति करून तीं व्रतें करण्यानें कोणतें फल प्राप्त होतें तें सांगतात.

इत्याहोरात्रिकाचार- ।

चारिणि व्रतधारिणि ॥
स्वर्गश्रीः क्षिपते मोक्ष- ।
श्रीर्ष्ययेव वरस्रजम् ॥ ४५ ॥

टीका—क्षिपते मुंचति । काऽसौ स्वर्गश्रीः यथास्वं सौधर्मादिकल्पलक्ष्मीः । कां वरस्रजं वरोऽभिमतः पतिर्वरणं वा तत्स्वीकरणं वरार्था स्रक् माला वरस्रक् तां वरमालामित्यर्थः । क व्रतधारिणि व्रतानि प्रागुक्तानि धारयत्यात्मनि निरतिचारतया स्थिरीकरोत्यभीक्ष्णमिति व्रतधारी व्रतिकप्रतिमारूढः श्रावकस्तस्मिन् । किंविशिष्टे इत्येवमुक्तप्रकारेण । आहोरात्रिकमहोरात्रभवमाचारं ब्राह्ममुहूर्तोत्थानादिकं चरत्यनुतिष्ठतीत्येवंशीलस्तच्चारी तस्मिन् । अत्रोत्प्रेक्षामाह मोक्षश्रीर्ष्ययेवेति । मोक्षश्रियामीर्ष्याऽक्षान्तिर्मोक्षश्रीर्ष्या तया । इयमत्र भावना– यथा काचिन्महाकुलीनकन्या पित्रादिभिरनुज्ञाता अभीष्टपताविमं नान्या स्वीकुर्यादिति बुध्या वरमालां क्षिपति तथा तत्तादृङ्महाश्रावके मोक्षश्रीर्ष्यया स्वर्गश्रीरिति भद्रम् ॥

अर्थ—ह्याप्रमाणें अहोरात्र सांगितलेलीं कर्मे करणारा जो व्रतिक श्रावक त्याच्या कंठांत स्वर्गलक्ष्मी ही मोक्षलक्ष्मीच्या ईर्षेनेंच कीं काय " ह्मणजे मोक्षलक्ष्मी ह्या श्रावकास प्रथम वरील तें बरें नव्हे; अशा समजुतीनेंच कीं काय ! " उत्कृष्ट माला घालिते. तात्पर्य ; वर दाखविलेलीं कर्मे करणाऱ्या श्रावकांस मोक्षप्राप्तीच्या आधीं स्वर्गही सहज प्राप्त होतो.

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मदीपिकायां
भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितः पञ्चदशः
प्रक्रमाच्च षष्ठोऽध्यायः समाप्तः

अध्याय सहावा समाप्त.

## ॥ अथ सप्तमोऽध्यायः ॥

अथ सामायिकादिप्रतिमानवकस्वरूपप्ररूपणार्थमुपक्रमते । तत्र यद्व्रतिकप्रतिमायां सामायिकं शीलतया निर्दिष्टं तदेवेह व्रतत्वेन प्रतिपद्यमानं प्रतिमारूपतां यातीति प्ररूपयन्नाह—

आतां सामायिकादि नऊ प्रतिमांचें स्वरूप सांगण्यास आरंभ करतात. त्यांत ज्या व्रतांत सामायिक हें शील ह्मणून ( ह्मणजे अमुख्य ह्मणून ) सांगितलें आहे, तेंच सामायिक व्रतरूपानें ग्रहण करणें ह्यास सामायिकप्रतिमा असें ह्मणतात. हा विषय पुढील श्लोकांत सांगतात.

सुदृङ्मूलोत्तरगुण- ।
ग्रामाभ्यासविशुद्धधीः ॥
भजँस्त्रिसन्ध्यं कृच्छ्रेऽपि ।
साम्यं सामायिकी भवेत् ॥ १ ॥

टीका—भवेत् भवितुमर्हति । कोऽसौ व्रतिकः । कीदृशः सामायिकी सामायिकप्रतिमावान् । किं कुर्वन् भजन् सेवमानः किं तत्साम्यं मोहक्षोभविहीनमात्मपरिणामं । कथं त्रिसन्ध्यं सन्ध्यात्रये । क्व सति कृच्छ्रेऽपि परीषहोपसर्गसान्निपातेऽपि । कथम्भूतो भूत्वा सुदृगित्यादि— दृक्सम्यक्त्वं मूलोत्तरगुणग्रामः प्रागुक्तलक्षणः दृक्क मूलोत्तरगुणग्रामश्च दृङ्मूलोत्तरगुणग्रामौ प्रशस्तौ निरतिचारौ दृङ्मूलोत्तरगुणग्रामौ सुदृङ्मूलोत्तरगुणग्रामौ। तयोरभ्यासोऽसकृत्प्रवृत्तिः तेन विशुद्धा प्रतिबन्धकापायात् प्रकृतसंयमानुष्ठानसाधनसामर्थ्यं प्राप्ता धीर्ज्ञानं यस्य स तथोक्तः ॥

**अर्थ**— जो व्रतिक श्रावक सम्यक्त्वी असून, मूलगुण व उत्तर गुण यांच्या अभ्यासानें ज्याची बुद्धि संयमानुष्ठानाला समर्थ झाली आहे असा होत्साता, प्रातःकाल मध्यान्हकाल व सायंकाल ह्या तिन्हीं कालीं परीषह व उपसर्ग हे प्राप्त झाले असतांही त्यांस न जुमानतां समबुद्धी ठेवतो, तो श्रावक सामायिक प्रतिमावान् असा होतो.

व्यवहारसामायिकविध्युपदेशपुरःसरं निश्चयसामयिकं विधेयतयोपदिशति—

ह्याप्रमाणें व्यवहारसामायिक विधीचा उपदेश करून; निश्चयसामायिक करण्याविषयीं स्तुतिपूर्वक उपदेश करतात.

कृत्वा यथोक्तं कृतिकर्म सन्ध्या- ।
त्रयेऽपि यावन्नियमं समाधेः ॥
यो वज्रपातेऽपि न जात्वपैति ।
सामायिकी कस्य स न प्रशस्यः ॥ २ ॥

**टीका**—स सामायिकी कस्य सामायिकार्थिनः शक्रादेर्वा न प्रशस्यः सर्वस्यापि श्लाघ्य इत्यर्थः । यः किं यो नापैति न प्रच्यवते । कस्मात्समाधेः रत्नत्रयैकाग्रलक्षणाद्योगात् । कदा जातु कदाचिदपि । क्व सति वज्रपातेऽपि वज्रेऽपि पतति सति । किं पुनरन्यत्रोपसर्गकारणे । कियत्कालमित्याह— यावन्नियमं प्रतिज्ञावधि । एतन्निश्चयसामायिकं । किं कृत्वा अनुष्ठाय । किं तत् कृतिकर्म किंविशिष्टं यथोक्तं आवश्यकाध्याये योग्यकालेत्यादिप्रबन्धेन व्याख्यातं वन्दनाकर्म । क्व सन्ध्यात्रयेऽपि तिसृष्वपि

सन्ध्यासु शक्त्याऽन्यदाऽपि। साम्यभावनानुज्ञानार्थो वा अपिशब्दः। एतद्व्यवहारसामायिकम् ॥

अर्थ—जो सामायिकव्रत करणारा श्रावक पूर्वी सांगितल्याप्रमाणें वंदना कर्म करून, तिन्ही कालींही जितका कालपर्यंत नियम केला असेल, तितका कालपर्यंत वज्रपाताचा प्रसंग आला असतां सुद्धां केव्हांही समाधीपासून भ्रष्ट होत नाहीं, तो श्रावक कोणीं स्तुति करण्यास योग्य नाहीं बरें? अर्थात सर्वांस स्तुत्य आहे.

निश्चयसामायिकशिखराधिरूढाय श्लाघते—

आतां; निश्चय सामायिकाच्या पराकाष्ठेस पोंचलेल्या श्रावकाची स्तुति करतात.

आरोपितः सामयिक- ।
व्रतप्रासादमूर्धनि ॥
कलशस्तेन येनैषा ।
भूरारोहि महात्मना ॥ ३ ॥

टीका—आरोपितः स्थापितः। कोऽसौ कलशः। केन तेन। क सामायिकेत्यादि— समयः केशबन्धादिनियमितः कालस्तत्रभवं सामायिकं साम्यभावनं तदेव व्रतं सामायिकव्रतं तदेव प्रासादो देवगृहं दुरासदत्वात् दुरारोहत्वादिष्टसिद्धिनिबन्धनत्वाच्च तस्य मूर्धनि शिखराग्रे। येन किं कृतं येन महात्मना गणधरचक्रधरेन्द्रादीनां स्पृहणीयेन। आरोहि आरूढा। काऽसौ एषा भूर्व्यवहारसामायिकपूर्वा निश्चयसामायिकप्रतिमा ॥

अर्थ—ज्या महात्म्यानें हें निश्चयसामायिकव्रत प्राप्त

करून घेतलें, त्यानें सामायिकव्रतरूपी प्रासादाच्या शिखरावर कळस ठेविला असें ह्मणण्यास हरकत नाहीं.

अथ चतुःश्लोक्या प्रोषधोपवासस्थानं व्याचष्टे—

आतां; कशा प्रकारचा श्रावक प्रोषधोपवास करणारा होतो, हें सांगतात.

स प्रोषधोपवासी स्या- ।
यः सिद्धः प्रतिमात्रये ॥
साम्यान्न च्यवते याव-।
त्प्रोषधानशनव्रतम् ॥ ४ ॥

टीका—स्याद्भवेत् । कोऽसौ स श्रावकः । किंविशिष्टः प्रोषधोपवासी प्रोषधोपवासप्रतिमावान् । यः किं यो न च्यवते न भ्रश्यति । कस्मात्साम्यात् भावसामायिकात् । प्रोषधोपवासशीले तु तदुपरमे नामादिसामायिकपञ्चकस्याप्यनुचरणात् । कियत्कालं यावत्प्रोषधानशनव्रतं प्रोषधोपवासप्रतिज्ञाविषयीकृतान् षोडश यामान् । किंविशिष्टः सन् सिद्धः निष्पन्नः प्रतीतो वा । क्व प्रतिमात्रये दर्शनव्रतसामायिकप्रतिमासु ॥

अर्थ—जो प्रतिमात्रयांत (दर्शन व्रत व सामायिक ह्यांत सिद्धि पावला असेल व जोंपर्यंत प्रोषधोपवासव्रत केलें असेल तोंपर्यंत (सोळा प्रहर पर्यंत) जो साम्यावस्थेपासून भ्रष्ट होत नाहीं तो श्रावक प्रोषधोपवासी होतो.

प्रोषधोपवासिनो निष्ठाकाष्ठां निर्दिशति—

आतां; प्रोषधोपवास करणाऱ्या श्रावकाच्या महत्वाची मर्यादा सांगतात.

त्यक्ताहाराङ्गसंस्कार- ।
व्यापारः प्रोषधं श्रितः ॥
चेलोपसृष्टमुनिव- ।
द्भाति नेदीयसामपि ॥ ५ ॥

टीका—भाति प्रतिभासते । कोऽसौ प्रोषधं श्रितः प्रोषधोपवासनिष्ठः । किंवत् चेलोपसृष्टमुनिवत् उपसर्गवशाद्वस्त्रेण वेष्टितो निर्ग्रन्थो यथा ब्रह्मचर्यधारणशरीरादिममत्ववर्जनयोगात् । केषां नेदीयसां पार्श्ववर्तिलोकानां बान्धवादीनां वा । विशेषलोऽन्येषामित्यपिशब्दार्थो विस्मये वा अपिशब्दः । किंविशिष्टः सन् त्यक्तेत्यादि— आहारोऽशनादिश्चतुर्विधः अङ्गसंस्कारः स्नानोद्वर्तनवर्णकविलेपनपुष्पगन्धविशिष्टवस्त्राभरणादिर्व्यापारः साहचर्यात्सावद्यारम्भः आहारश्चाङ्गसंस्कारश्च व्यापारश्चाहाराङ्गसंस्कारव्यापारास्त्यक्ताः सर्वात्मना प्रत्याख्यातास्ते त्रयो येन । एतेन आहारादित्रयवर्जनाद्ब्रह्मचर्यधारणाच्च चतुर्विधं प्रोषधव्रतमुक्तम् ॥

**अर्थ—ज्यानें भोजन व अंगसंस्कार करणें- ह्म० स्नान करणें, उटणी लावणें, गंध लावणें, माला धारण करणें- वगैरे व्यापार सोडिले आहेत असा प्रोषधोपवास करणारा श्रावक, सर्वदा समीप असणाऱ्या लोकांस देखील, मशकादिकांचा त्रास न व्हावा ह्मणून वस्त्र परिधान करणाऱ्या निर्ग्रंथमुनीप्रमाणें वाटतो.**

सामायिकप्रोषधोपवासयोः प्रतिमाभावे युक्तिमाह—

**प्रोषधोपवासास व्रत कां ह्मणावें? याबद्दल युक्ति सांगतात.**

यत्प्राक्सामायिकं शीलं ।
तद्व्रतं प्रतिमावतः ॥
यथा तथा प्रोषधोप- ।
वासोऽपीत्यत्र युक्तिवाक् ॥ ६ ॥

**टीका**—अस्ति । काऽसौ युक्तिवाक् समाधानवचनं । क्व अत्र सामायिकप्रोषधोपवासयोः प्रतिमाभावविप्रतिपत्तौ । कथं इति । किमिति भवति कोऽसौ प्राक्शीलतया अभ्यस्तः प्रोषधोपवासोऽपि । किं व्रतं । कस्य प्रतिमावतः चतुर्थसंयमविशेषपदमनुतिष्ठतः श्रावकस्य । कथं तथा । यथा किं यथा भवति । किं तत् सामायिकं किं भवति व्रतं । सस्यवद्रक्षणीयत्वात् । कस्य प्रतिमावतः तृतीयसंयमविशेषपदमनुतिष्ठतः श्रावकस्य । यत् किं यत्सामायिकं । भवति । किं शीलं सस्यस्य वृतिरिव मुख्यतया रक्षणीयस्य व्रतस्य रक्षणकारणत्वात् । क्व प्राक् व्रतप्रतिमानुष्ठानसमये ॥

**अर्थ**—पूर्वी ह्मणजे व्रतप्रतिमानुष्ठानाच्या वेळीं जें सामायिक शील ह्मणजे मुख्य व्रताचें रक्षक होतें, तें सामायिक जसें चतुर्थसंयमस्थानांत असलेल्या श्रावकास व्रत होत असतें, त्याप्रमाणेंच तृतीयसंयमस्थानांत असलेल्या श्रावकास प्रोषधोपवासही व्रतस्वरूप होतो. हें प्रोषधोपवासास व्रत ह्मणण्यासंबंधाचें बीज ( समाधान ) आहे.

परमकाष्ठाप्रतिपन्नान् प्रोषधोपवासिनः प्रशंसति—

आतां पराकाष्ठेस पावलेल्या प्रोषधोपवास करणाऱ्याची स्तुति करितात.

निशां नयन्तः प्रतिमा- ।
योगेन दुरितच्छिदे ॥
ये क्षोभ्यन्ते न केनापि ।
तान्नुमस्तुर्यभूमिगान् ॥ ७ ॥

टीका—नुमः स्तुमो वयं । कान् तान् तुर्यभूमिगान् चतुर्थीं संयमविशेषपदवीमारूढान् । ये किं ये न क्षोभ्यन्ते सामाधेर्न प्रच्याव्यन्ते । केन केनापि परिषहेणोपसर्गेण वा । किं कुर्वन्तः नयन्तो लङ्घयन्तः । कां निशां पर्वरात्रिं । केन प्रतिमायोगेन संयतवत् कायोत्सर्गावस्थानेन । कस्यै दुरितच्छिदे अशुभकर्मनिर्जरणार्थं ॥

अर्थ— अशुभकर्मांच्या नाशाकरितां कायोत्सर्ग करून रात्र घालविणारे जे श्रावक कोणत्याही उपसर्गानें किंवा परीषहानें समाधीपासून चळत नाहींत, त्या चवथ्या संयमस्थानीं असलेल्या श्रावकांची आह्मी स्तुति करतों.

अथ सचित्तविरतस्थानं चतुःश्लोक्या व्याचष्टे—

आतां; सचित्तविरत कोणास ह्मणावें तें सांगतात.

हरिताङ्कुरबीजाम्बु- ।
लवणाद्यप्रासुकं त्यजन् ॥
जाग्रत्कृपश्चतुर्निष्ठः ।
सचित्तविरतः स्मृतः ॥ ८ ॥

टीका—स्मृतः । सूत्रज्ञैराम्नातः । कोऽसौ सचित्तविरतश्रावकः । किं कुर्वन् त्यजन् वर्जयन् अभक्षयन्नित्यर्थः । किं तत् हरीताङ्कुरबीजाम्बुलवणादि अङ्कुरः प्ररोहः बीजं प्ररोहणद्रव्यं अम्बु जलं लवणं सैन्धवादि आदिशब्देन कन्दमूलफलपत्रकरीरादि,

अंकुरश्च बीजं च अंकुरबीजमुपलक्षणात् त्वक्पत्रादि, हरीतमम्लानार्द्रावस्थं। हरीतं च तदंकुरबीजं च हरीतांकुरबीजं तच्चाम्बुलवणादि च हरीतांकुरबीजाम्बुलवणादि। किंविशिष्टमप्रासुकमनग्निपक्कमित्यर्थः। अत्र च द्वितीयपादे नवाक्षरत्वं न दोषाय अनुष्टुभि नवाक्षरस्यापि पादस्य शिष्टप्रयोगे क्वापि क्वापि दृश्यमानत्वात्। यथा– ऋषभाद्या वर्द्धमानान्ता जिनेन्द्रा दश पन्च वेत्यादिषु। अथवा हरीताङ्कुरबीजाब्लवणाद्यप्रासुकं त्यजन्निति पाठः। अत्र आपो जलं। किंविशिष्टोऽसौ जाग्रत्कृपो यतः जाग्रती नित्यं हृदि स्फुरन्ती कृपा अनुकम्पा यस्य स जाग्रत्कृपो दयामूर्तिरित्यर्थः। कथम्भूतो भूत्वा हरीताङ्कुरादिकमभक्षयन्साचित्तविरतः स्मृतः चतुर्निष्ठः चतसृषु पूर्वोक्तप्रतिमासु निष्ठा निर्वाहो यस्य स चतुर्निष्ठः॥

अर्थ– हिरवे मोड व बीं, पाणी, मीठ वगैरे (गड्डा मुळें, फळें, साली) ह्या जीवयुक्त पदार्थांचा त्याग करणारा व ज्याच्या अंतःकरणांत दया निरंतर वास करीत आहे असा व पूर्वी सांगितलेल्या चार प्रकारच्या व्रतांचें आचरण करणारा जो श्रावक, तो 'सचित्तविरत' (सजीव पदार्थांचा त्याग करणारा) असा समजावा. [ह्या श्लोकांतील दुसऱ्या चरणांत नऊ अक्षरें आहेत हा जरी छंदःशास्त्राप्रमाणें दोष आहे; तथापि कित्येक ठिकाणीं (ऋषभाद्या वर्द्धमानान्ता जिनेन्द्रा दश पञ्च च) विद्वानांचे तसे प्रयोग दृष्टीस पडतात. ह्मणून, त्या दोषाची उपेक्षा करावी.]

जाग्रत्कृप इति समर्थयते–

वरील श्लोकांत 'ज्याच्या अंतःकरणांत दया निरंतर

वास करीत आहे तो श्रावक सचित्तविरत असा समजावा' असें सांगितलें आहे. त्यांत, दया असल्यानें सचित्त-विरति कशी होते? ह्याची उपपत्ति सांगतात.

पादेनापि स्पृशन्नर्थ- ।
वशाद्योऽतिऋतीयते ॥
हरितान्याश्रितानन्त- ।
निगोतानि स भोक्ष्यते ॥ ९ ॥

टीका—भोक्ष्यते काका न भक्षयिष्यतीत्यर्थः । कोऽसौ स पञ्चमसंयमस्थानसाधनोद्यतः श्रावकः । कानि हरितानि हरितावस्थवनस्पतीन् । किंविशिष्टानि आश्रितानन्तनिगोतानि आश्रितानि संसक्तानि अनन्तानि निगोतानि निगोताख्याः साधारणशरीरवनस्पतिकायिका येषु तानि । उक्तं चार्षे ब्राह्मणसृष्टिप्रस्तावे– सन्त्येवानन्तशो जीवा हरितेष्वन्कुरादिषु । निगोता इति सार्वज्ञं देवास्माभिः श्रुतं वचः ॥ १ ॥ यः किं यो अतिऋतीयते पाक्षिकाद्यपेक्षया अतिशयेन घृणां करोति । किं कुर्वन् स्पृशन् परामृशन् । कानि तथाभूतहरितानि । केन पादेन चरणेन किं पुनर्हस्तादिनेत्यपिशब्दार्थः । कस्मात् अर्थवशात् प्रयोजनानुरोधात् । किं पुनः प्रयोजनाभावात् । प्रयोजनं विना स्थावरविराधनादपि निवृत्तिप्रतिज्ञानात् ॥

अर्थ—जो श्रावक, कांहीं कारणामुळें एखाद्या पदार्थास पायानें स्पर्श करीत असतांहि दयेनें अत्यंत कळवळतो; तो श्रावक, ज्यांवर अनंत जीव रहात आहेत असे कोंवळे मोड, बीं वगैरे पदार्थ भक्षण करील काय? केव्हांही करणार नाहीं!

सचित्तविरतेभ्यः श्लाघते—

**सचित्तविरतांची स्तुति करतात.**

अहो जिनोक्तिनिर्णीति- ।
रहो अक्षजितिः सताम् ॥
नालक्ष्यजन्त्वपि हरित् ।
प्सान्त्येतेऽसुक्षयेऽपि यत् ॥ १० ॥

**टीका**—अहो आश्चर्यं वर्तते । काऽसौ जिनोक्तिनिर्णीतिः जिनागमनिश्चयः । केषां सतां प्रकरणात् साचित्तविरतिप्रयतानां । तथा अहो आश्चर्यं वर्तते! काऽसौ? अक्षजितिः इन्द्रियजयः केषां सताम् । अत्रोपपत्तिमाह— यद्यस्मात् । न प्सान्ति न भक्षयन्ति । के एते सन्तः । किं तत् हरित् हरितं । किंविशिष्टमपि अलक्ष्यजन्त्वपि अलक्ष्याः अस्मदाद्यपेक्षया केवलागमगम्यत्वात् प्रत्यक्षाद्यसंवेद्याः जन्तवः प्राणिनो यस्मिन् तदलक्ष्यजन्तु हरितं वस्तु । किं पुनर्दृश्यानुमेयप्राणिकमित्यपि-शब्दार्थः । क्व सति असुक्षयेऽपि असूनां प्राणानां क्षयः प्रलयः असुक्षयस्तस्मिन्नपि प्राणेषु नश्यत्स्वपि । किं पुनः प्रकारान्तरेण जीविते सम्भवतीत्यपिशब्दार्थः । अत्रालक्ष्यजन्त्वपीत्यनेन जिनागम-प्रामाण्यविश्वासोऽसुक्षयेऽपीत्यनेन च जितेन्द्रियत्वं समर्थ्यते ॥

**अर्थ—सज्जनांचा श्रीजिनोक्तीविषयींचा विश्वास व इंद्रियनिग्रह हे दोन्ही मोठे आश्चर्यकारक आहेत! कारण, जिनोक्तीवर विश्वास ठेवणारे व इंद्रियनियमन करणारे सत्पुरुष, ज्यांतील जंतू दिसत सुद्धां नाहींत असे कोंवळे पदार्थ, प्राण जाण्याच्या प्रसंगींही भक्षण करीत नाहींत!!**

साम्प्रतं भोगोपभोगपरिमाणशीलातिचारत्वेनोक्तं सचित्तभोजनमिह त्यज्यमानं प्रतिमाभावं यातीत्युपदिशति—

आतां; मागें भोगोपभोगपरिमाणव्रताचा अतिचार ह्मणून सांगितलेलें सचित्तभोजन ( जीवयुक्त पदार्थांचें भक्षण ) ह्या प्रसंगीं सोडिलें असतां तें व्रतत्वास प्राप्त होतें असें सांगतात.

सचित्तभोजनं यत्प्रा- ।
ङ्मलत्वेन जिहासितम् ॥
व्रतयत्यङ्गिपञ्चत्व- ।
चकितस्तच्च पञ्चमः ॥ ११ ॥

टीका—व्रतयति व्रतत्वेन प्रत्याख्याति । कोऽसौ पञ्चमः सचित्तविरत्युद्यतः । किं तत् तच्च तदपि । किंविशिष्टो यतः अङ्गिपञ्चत्वचकितः अङ्गिनां भक्ष्यमाणसचित्तद्रव्याश्रितजीवानां पञ्चत्वं मरणं अङ्गिपञ्चत्वं तस्माच्चकितो भीतो यतः । यत्किं यज्जिहासितं त्यक्तुमिष्टं शीलोपदेशस्याभ्यासदशाविषयत्वात् किं तत् सचित्तभोजनं जीवाश्रितद्रव्यवल्भनं । केन व्रतिकेन । केन कृत्वा मलत्वेन भोगोपभोगपरिमाणाख्यशीलातिचारत्वेन । क्व प्राक् शीलोपदेशसमये । स्वामी पुनर्भोगोपभोगपरिमाणशीलातिचारानन्यथा पठित्वा पञ्चमप्रतिमामेवमध्यगीष्ट— मूलफलशाकशाखाकरीरकन्दप्रसूनबीजानि । नामानि योऽत्ति सोऽयं सचित्तविरतो दयामूर्तिः ॥

अर्थ—हा सचित्तविरति नांवाच्या पांचव्या प्रतिमेंत असलेला श्रावक, जें सजीवपदार्थांचें भक्षण, भोगोपभोगपरिमाणव्रताचा अतीचार ह्मणून टाकिता झाला होता;

तेंच सजीवपदार्थांचें भक्षण, त्या सजीवपदार्थांत असलेल्या अनेक जीवांची हिंसा होईल ह्या भीतीनें सोडून देतो. तात्पर्य- सचित्तविरतिरूपी पांचव्या पदावर आरूढ झालेल्या श्रावकाचें अंतःकरण फार दयाळु असल्यानें तो सजीवपदार्थांच्या भक्षणाच्या त्यागाचें व्रत करितो.

अथ रात्रिभक्तव्रतं चतुःश्लोक्या व्याकरिष्यन् आदौ तल्लक्षणमाह—

आतां; पुढील चार श्लोकांनीं रात्रिभक्तव्रताचें स्पष्टीकरण करण्याकरितां प्रथम त्याचें लक्षण सांगतात.

स्त्रीवैराग्यनिमित्तैक- ।
चित्तः प्राग्वृत्तनिष्ठितः ॥
यस्त्रिधाऽह्नि भजेन्न स्त्रीं ।
रात्रिभक्तव्रतस्तु सः ॥ १२ ॥

टीका— स तु श्रावको भवति । किंविशिष्टः रात्रिभक्तव्रतः । यः किं यो न भजेत् न सेवेत् । कां स्त्रीं निःशेषामपि योषां । क अह्नि दिने । कथं त्रिधा मनोवाक्कायकृतकारितानुमतैः । किंविशिष्टः सन् स्त्रीत्यादि- स्त्रीवैराग्यनिमित्तानि कामदोषाः स्त्रीदोषाः स्त्रीसङ्गदोषा अशौचमार्यसङ्गतिश्चेति पञ्च तेष्वेकचित्तो यः स तथोक्तः तदेकाग्रमना इत्यर्थः । कथम्भूतो भूत्वा प्राग्वृत्तनिष्ठितः पूर्वोक्तप्रतिमापञ्चकाचारनिरूढः ॥

अर्थ— स्त्रियांविषयीं वैराग्य उत्पन्न होण्यास जीं पांच (इच्छेंतील दोष, स्त्रियांमध्यें असलेले दोष, स्त्रीसमागमांत असलेले दोष, अशुद्धपणा आणि सज्जनांची संगति)

साधनें आहेत त्यांत ज्याचें मन गढून गेलें आहे असा व पूर्वींच्या पांचही प्रतिमांस योग्य असा आचार ठेवणारा असा जो श्रावक; मन, वाणी व शरीर ह्या तीहींच्या योगानें दिवसा कोणत्याही स्त्रीचा उपभोग करीत नसेल; तो श्रावक रात्रिभुक्तव्रत ( रात्रीं भोजन न करणें हें व्रत ) करीत आहे असें समजावें.

षष्ठप्रतिमानिष्ठानभिष्टौति—

सहाव्या प्रतिमेंत असलेल्या श्रावकाची स्तुति करितात.

अहो चित्रं धृतिमतां ।
सङ्कल्पच्छेदकौशलम् ॥
यन्नामापि मुदे साऽपि ।
दृष्टा येन तृणायते ॥ १३ ॥

टीका—अहो चित्रमाश्चर्यं वर्तते । किं तत् संकल्पच्छेदकौशलं मनोव्यापारनिरोधसामर्थ्यं । केषां धृतिमतां संतोषभावनायुक्तानां पुंसां । येन किं येन संकल्पच्छेदकौशलेन । तृणायते तृणवत्प्रतिभाति अभोग्यतयाऽऽत्मानं तेषां दर्शयतीत्यर्थः । काऽसौ साऽपि कान्ता । किंविशिष्टा सती दृष्टा चक्षुर्गोचरीकृता । तथा आवृत्या सा कान्ता दृष्टाऽपि किं पुनः श्रुता संकल्पिता चेत्यपिशद्धार्थः । गृहस्थस्य हि स्वदारान्प्रति प्रेम दृग्व्यापारश्च दुःखं प्रतिपेदे । सा का यन्नामापि यस्याः सञ्ज्ञाऽपि श्रुता भवति । कस्यै मुदे प्रीतये । किं पुनर्दर्शनादिकमित्यपिशब्दार्थः ॥

अर्थ— धैर्यशाली पुरुषांचें आपल्या अंतःकरणांत उत्पन्न होणाऱ्या कामविकारास दाबून ठेवण्याचें सामर्थ्य

फारच चमत्कारिक असतें! कारण, जिचें नांव ऐकिलें तरी देखील आनंद होतो अशा स्त्रीस, प्रत्यक्ष पाहिली असतांसुद्धां, त्या पुरुषांना ज्या सामर्थ्यामुळेंच ती अगदीं तृणतुच्छ होते.

एतस्य राज्यादावपि मैथुनविनिवृत्तिमुपपादयन्नाह--

अशा विरक्तपुरुषांचें रात्रींदेखील स्त्रीसमागमाविषयीं औत्सुक्य नसतें असें युक्तीनें दाखवितात.

रात्रावपि ऋतावेव ।
सन्तानार्थमृतावपि ॥
भजन्ति वशिनः कान्तां ।
न तु पर्वदिनादिषु ॥ १४ ॥

टीका---भजन्ति सेवन्ते के वशिनो जितेन्द्रियाः । कां कांतां प्रियां । क ऋतावेव पुष्पदर्शनोत्तरभाविचतुर्थदिवसस्नानानन्तरमेव नान्यदा । क रात्रावपि निश्यपि । तथा ऋतावपि सन्तानार्थमेव ते भजन्ति तां न विषयसुखार्थं । एवशब्दोऽत्र सन्दशकन्यायेन उभयत्र योज्यः । न तु न पुनः कथमपि वशिनस्त्रियं भजन्ति । केषु पर्वदिनादिषु पर्वदिनानि धर्मकर्मानुष्ठानदिनान्यष्टम्यादीनि आदिशब्देन अमावास्याग्रहणादीनि गृह्यन्ते ॥

अर्थ—जे इंद्रियनिग्रह करणारे पुरुष असतात, ते, स्त्री ऋतुमती होऊन चवथ्या दिवशीं तिनें स्नान केल्यावर रात्रीं तिचा उपभोग करितात; तो उपगोग तरी केवळ संततीकरितांच करितात; तिच्यावर अनुरक्त होऊन करीत नाहींत. आणि तो देखील पर्वांच्या दिवशीं करीत नाहींत.

( अधुना चारित्रसारादिशास्त्रमतेन रात्रिभक्तव्रतं निरुक्त्या लक्षयन् रत्नकरण्डकादिप्रसिद्धं तदर्थं कथयति—

**आतां चारित्रसारादि ग्रंथांत सांगितल्याप्रमाणें रात्रिभुक्तव्रताचें लक्षण सांगून रत्नकरंडकांत सांगितल्याप्रमाणें त्याचा अर्थ दाखवितात.**

**रात्रिभक्तव्रतो रात्रौ ।**
**स्त्रीसेवावर्तनादिह ॥**
**निरुच्यतेऽन्यत्र रात्रौ ।**
**चतुराहारवर्जनात् ॥ १५ ॥**

टीका—निरुच्यते व्युत्पाद्यते । कोऽसौ रात्रिभक्तव्रतः समासशब्दः । क इह अस्मिन् चारित्रसारादिशास्त्रानुसारिणि ग्रन्थे । कस्मात् रात्रौ निशि स्त्रीसेवाया वर्तनात् रात्रौ भक्तं स्त्रीभजनं व्रतयति रात्रिभक्तव्रत इति तच्छब्दस्य व्युत्पादनात् । अन्यत्र पुना रत्नकरंडकादिशास्त्रे रात्रिभक्तव्रतशब्दो निरुच्यते । कस्मात् रात्रौ चतुराहारवर्जनात् रात्रौ भक्तं चतुर्विधमप्याहारं व्रतयति प्रत्याख्यातीति रात्रिभक्तव्रत इति तच्छब्दव्युत्पादनात् । यदाह स्वामी—अन्नं पानं खाद्यं लेह्यं नाश्नाति यो विभावर्याम् । स च रात्रिभक्तविरतः सत्वेष्वनुकम्पमानमनाः ॥

**अर्थ—चारित्रसारादि ग्रंथांत "आम्ही रात्रीच्या वेळींच स्त्रीसंभोग करूं, दिवसास करणार नाहीं" असें व्रत घेणें ह्यास रात्रिभक्तव्रत असें मानिलें आहे. आणि दुसऱ्या म्हणजे रत्नकरंडकांत "रात्रीं चारी प्रकारच्या आहाराचा ( अन्न ह्म० नुसते गिळण्याचे पदार्थ, पान ह्म० पिण्याचे पदार्थ, खाद्य ह्म० चावावयाचे पदार्थ आणि लेह्य ह्म०**

चाटावयाचे पदार्थ, असा चार प्रकारचा आहार आहे.) त्याग करणें " असा अर्थ केला आहे.

अथ ब्रह्मचर्यस्थानं व्याचष्टे—

आतां; ब्रह्मचर्य नांवाच्या सप्तमप्रतिमेचें व्याख्यान करितात.

तत्तादृक्संयमाभ्यास- ।
वशीकृतमनाः त्रिधा ॥
यो जात्वशेषा नो योषा ।
भजति ब्रह्मचार्यसौ ॥ १६ ॥

टीका— भवति कोऽसावसौ श्रावकः । किंविशिष्टो ब्रह्मचारी ब्रह्मणि चारित्रे आत्मनि ज्ञाने चरति प्रवर्तत इत्येवंव्रतः । यः किं यो नो भजति न सेवते । काः योषाः स्त्रीः । किंविशिष्टाः अशेषाः मानवीर्दैवीस्तिरश्चीस्तत्प्रतिकृतीश्च । कदा जातु कदाचिद्दिवा रात्रौ च कथं त्रिधा त्रिविधेन कथम्भूतो भूत्वा तदित्यादि— स प्राक् प्रतिमाषट्कानिर्दिष्टः तादृक् क्रमोपचितः संयमः प्राणीन्द्रियपरिहाररूपापत्हतसंयमैकदेशस्तस्याभ्यासो भावना तेन वशीकृतं स्वाधीनतां नीतं मनश्चित्तं येन स तथोक्तः ॥

अर्थ—मागील श्लोकांत दाखविलेल्या सहा प्रतिमांतील क्रमानें केलेल्या इंद्रियनिग्रहाच्या अभ्यासानें ज्यानें आपलें अंतःकरण ताब्यांत ठेविलें आहे असा जो श्रावक, कोणत्याही स्त्रीचा ( मनुष्यस्त्रीचा, देवस्त्रीचा अथवा पशुपक्ष्यांतील स्त्रियांचा ) मनानें वाणीनें अथवा शरीरानें केव्हांही ( रात्रीं किंवा दिवसां ) उपभोग करीत नाहीं, तो श्रावक ब्रह्मचारी समजावा.

ब्रम्हचारिणं श्लाघते—

आतां; ब्रह्मचारी श्रावकाची स्तुति करतात.

अनन्तशक्तिरात्मेति ।
श्रुतिर्वस्त्वेव न स्तुतिः ॥
यत्स्वद्रव्ययुगात्मैव ।
जगज्जैत्रं जयेत्स्मरम् ॥ १७ ॥

टीका—भवति । काऽसौ श्रुतिराप्तोपदेशः । कथं इति एवं-स्वरूपा । भवति । कोऽसावात्मा पुरुषः । किंविशिष्टोऽनन्तशक्तिः अनन्ता निःसीमाः शक्तयो अर्थक्रियाकारिसामर्थ्यानि यस्य सः अनन्तशक्तिः । इति श्रुतिः । किं भवति वस्त्वेव वस्तुविषयैव । न भवति । सा, सा किं स्तुतिः । गुणाल्पत्वे सति तद्बहुत्वकथनं कुत इत्याह—यद्यस्मात् जयेत् प्रतिबध्नीयात् । कोऽसावात्मैव । किंविशिष्टः स्वद्रव्ययुक् परद्रव्यव्यावर्तनेन आत्मद्रव्यं समादधानः । कं स्मरं कन्दर्पं । किंविशिष्टं जगज्जैत्रं जगतां परद्रव्यप्रवृत्तिमतां प्राणिनां जैत्रमभिभावुकं ॥

अर्थ—आत्मा हा ज्याचें सामर्थ्य फार विलक्षण आहे असा आहे, ह्याप्रमाणें प्राचीन पंडितांनीं केलेला उपदेश, आत्म्याचें खरें स्वरूप दाखविणारा आहे; स्तुति (अल्प-गुणाचें महत्व दाखविणें) नव्हे. कारण; आत्मा, जर आपल्याहून भिन्न अशा द्रव्यानें युक्त न होतां—ह्मणजे आत्म्याहून भिन्न द्रव्य असा जो देह त्याचे ठिकाणीं मीपणा न मानितां—स्वद्रव्यानें युक्त ह्मणजे स्वस्वरूपांत गढलेला असा असला, तर तो सर्वजगास जिंकणाऱ्या

मदनासही जिंकतो. तात्पर्य– 'ब्रह्मचारी' शद्बाचा "सम्यक्चारित्र पाळणारा, आत्मनिष्ठ आणि ज्ञानसम्पादन करणारा" असा अर्थ आहे. ह्मणून ब्रह्मचारी श्रावकाचा आत्मा हा आत्मनिष्ठ ह्मणजे स्वस्वरूपांत गढलेला असा असल्यानें तो मदनाचा पराभव करण्यास समर्थ असतो. कारण आत्मनिष्ठ अशा आत्म्याची देहाविषयीं अहंभावना (मीपणा) नसल्यानें, तो आपल्याहून भिन्न द्रव्य ह्मणजे देहरूपी द्रव्य त्यानें युक्त नसल्यामुळें, देहाविषयीं अहंभावना असल्यानें उत्पन्न होणारी विषयभोगाची इच्छा त्याच्या ठिकाणीं उत्पन्न होत नाहीं. ह्मणून ब्रह्मचारी श्रावकाचा आत्मा स्वस्वरूपीं गढलेला असल्यामुळें तो खरोखरच अनंतशक्ति आहे.

मन्दमत्यनुजिघृक्षया ब्रह्मचर्यमाहात्म्यमाह—

आतां मंदबुद्धि मनुष्यास चांगलें समजावें अशाविषयींच्या कळवळ्यानें ब्रह्मचर्याचें माहात्म्य सांगतात.

विद्या मन्त्राश्च सिध्यान्ति ।
किङ्करन्त्यमरा अपि ॥
क्रूराः शाम्यन्ति नाम्नाऽपि ।
निर्मलब्रह्मचारिणाम् ॥ १८ ॥

टीका—सिद्ध्यन्ति वरप्रदा भवन्ति । काः विद्याः साधितसिद्धाः । मन्त्राश्च पठितसिद्धाः । तथा किङ्करन्ति किङ्करा इव आचरन्ति । के अमराः देवाः । किं पुनर्मानवास्तिर्यञ्चो वेत्यपिशद्बार्थः । तथा शाम्यन्ति उपसर्गकरणान्निवर्तन्ते । के क्रूराः ब्रह्मराक्षसादयः । केन नाम्ना सञ्ज्ञोच्चारणमात्रेण । किं पुनः

सन्निधानेनेत्यपिशब्दार्थः । केषां निर्मलब्रह्मचारिणां निरतिचारब्रह्मचर्यभाजाम् ॥

अर्थ— ज्यांनीं निर्दोषब्रह्मचर्य पाळलें असेल, त्यांच्या सर्वविद्या व त्यानीं पठन केलेले सर्वमंत्र हे त्यास योग्य फल देतात, देवदेखील त्यांचे सेवक होतात; आणि त्यांच्या नुसत्या नांवानें देखील क्रूरजीव (भूतपिशाच ब्रह्मराक्षस वगैरे) शांत होतात.

प्रसङ्गवशाद्ब्रह्मचर्याश्रमं किञ्चिद्व्याचष्टे—

सहज प्रसंगामुळें ब्रह्मचर्याश्रमाची थोडी माहिती सांगतात.

प्रथमाश्रमिणः प्रोक्ता ।
ये पञ्चोपनयादयः ॥
तेऽधीत्य शास्त्रं स्वीकुर्यु- ।
र्दारानन्यत्र नैष्ठिकात् ॥ १९ ॥

टीका—ये प्रोक्ताः परमागमे प्रतिपादिताः । के प्रथमाश्रमिणः मौञ्जीबन्धनपूर्वव्रतानुष्ठायिनः । कति पञ्च । के ते उपनयादयः उपनय आदिर्येषामवलम्बादीनां ते तत्र उपनयब्रह्मचारिणो गणधरसूत्रधारिणः समभ्यस्तागमा गृहिधर्मानुष्ठायिनो भवन्ति । अवलम्बब्रह्मचारिणः क्षुल्लकरूपेणागममभ्यस्य परिगृहीतगृहावासा भवन्ति । अदीक्षाब्रह्मचारिणो वेषमन्तरेणाभ्यस्तागमा गृहधर्मनिरता भवन्ति । गूढब्रह्मचारिणः कुमारश्रमणाः सन्तः स्वीकृतागमाभ्यासा बन्धुभिर्दुःसहपरिषहैरात्मना नृपतिभिर्वा निरस्तपरमेश्वररूपा गृहवासरता भवन्ति । नैष्ठिकब्रह्मचारिणः समधिगतशिखालक्षितशिरोलिङ्गा

गणधरसूत्रोपलक्षितवक्षोलिङ्गाः शुक्लरक्तवसनकौपीनकटीलिङ्गाः तथा भिक्षावृत्तयो देवार्चनपरा भवन्ति । ते किं कुर्युरित्याह— परिगृह्णीयुः । के ते । कान् दारान् पत्नीः । किं कृत्वा अधीत्य पठित्वा । किं तत् शास्त्रमुपासकाध्ययनादि श्रुतं । कथमन्यत्र । कस्मात् नैष्ठिकात् नैष्ठिकं वर्जयित्वेत्यर्थः ॥

अर्थ— उपनयब्रह्मचारी, अवलंबब्रह्मचारी, अदीक्षाब्रह्मचारी, गूढब्रह्मचारी व नैष्ठिकब्रम्हचारी असे जे पांचप्रकारचे ब्रम्हचारी सांगितले आहेत ते शास्त्राचे अध्ययन करून, नंतर स्त्रीचा स्वीकार कारितात.... म्हणजे गृहस्थाश्रम स्वीकारितात. परंतु त्यांत जे नैष्ठिकब्रम्हचारी असतात, त्यांवाचून बाकीचे चार प्रकारचे ब्रम्हचारी मात्र गृहस्थाश्रम स्वीकारितात. नैष्ठिकब्रम्हचारी त्याचा स्वीकार करीत नाहींत.

त्यांत जे गणधरसूत्राचें व जैनागमाचें अध्ययन करून गृहस्थधर्माचा स्वीकार करणारे असतात, ते ‘ उपनयनब्रम्हचारी ’ होत. जे क्षुल्लकस्वरूपानें फक्त आगमाचें अध्ययन करून गृहस्थ होणारे असतात, ते ‘ अवलंब ब्रह्मचारी ’ असतात. जे ब्रह्मचर्यास योग्य अशा प्रकारचा वेष न धारण कारिता शास्त्राभ्यास करून गृहस्थ होणारे असतात ते ‘ अदीक्षाब्रह्मचारी ’ समजावेत. जे बालपणींच मुनि होऊन शास्त्राभ्यास करून पुढें आपल्या आप्त इष्टांच्या आग्रहामुळें, किंवा थंडी वारा सोसत नसल्यामुळें अथवा आपणालाच बरें न वाटल्यामुळें, किंवा राजाच्या भीतीमुळें, दिगंबरपणा सोडून गृहस्थाश्रम स्वीकारणारे असतात, ते ‘ गूढब्रह्मचारी ’ समजावेत. आणि जे

मस्तकावर शिखारूपी चिन्ह धारण करणारे व उरावर गणधरसूत्र (यज्ञोपवीत) धारण करणारे आणि पांढरें किंवा तांबडें कौपीन (लंगोटी) कंबरेला धारण करणारे व भिक्षा मागून निर्वाह करणारे व सर्वदा जिनपूजेंत आसक्त असे असतात ते 'नैष्ठिकब्रह्मचारी' समजावेत.

जिनदर्शने वर्णाश्रमव्यवस्था कुत्रास्तीति पृच्छन्तं प्रत्याह—

आतां; जिनशास्त्रांत वर्णाश्रमांची व्यवस्था असल्याचें सांगतात.

ब्रह्मचारी गृही वान- ।
प्रस्थो भिक्षुश्च सप्तमे ॥
चत्वारोऽङ्गे क्रियाभेदा- ।
दुक्ता वर्णवदाश्रमाः ॥ २० ॥

टीका—उक्ताः प्रणीताः । के आश्रमाः आ शास्त्रोक्तकालात् श्राम्यन्ति यथास्वं तपस्यन्तीत्याश्रमाः । किंवत् वर्णवत् ब्राह्मणादयो वर्णा यथा । कस्मात् क्रियाभेदात् धर्मकर्मविकल्पात् । कति चत्वारः । क्व अङ्गे । किंविशिष्टे सप्तमे उपासकाध्ययनाख्ये । तानेवोपदेष्टुमाह— ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चेति । उक्तं च ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । इत्याश्रमास्तु जैनानां सप्तमाङ्गाद्विनिःसृताः ॥ १ ॥ तत्क्रियाभेदस्तु किञ्चिदयं दर्श्यते— ब्रह्मचारिणस्तावदिमाः क्रियाः । द्विजसूनोर्गर्भाष्टमे वर्षे जिनालये कृतार्हत्पूजनस्य कृतमौण्ड्यस्य त्रिगुणमौञ्जीबन्धसप्तगुणग्रन्थित-यज्ञोपवीतादि लिङ्गं विशुद्धं स्थूलहिंसाविरत्यादिव्रतं ब्रह्मचर्योपबृंहितं गुरुसाक्षिकं धारणीयं । तत्क्रियाप्रपञ्चः पुनरार्षे— शिखी सितांशुकः सान्तर्वासा निर्वेषविक्रियः । व्रतचिन्हं दधत्सूत्रं तदोक्तो ब्रह्म-

चार्यसौ ॥ चरणोचितमन्यच्च नामधेयं तदाऽस्य वै । वृत्तिश्च भिक्षयाऽन्यत्र राजन्यादुद्धवैभवात् ॥ इत्यादिग्रन्थेनोक्तः प्रतिपत्तव्यः । पूर्वोक्तनित्यनैमित्तिकानुष्ठानस्थो गृहस्थः । स द्वेधा जातितीर्थक्षत्रियभेदात् । तत्र जातिक्षत्रियाः क्षत्रियब्राह्मणवैश्यशूद्रभेदाच्चतुर्विधाः । तीर्थक्षत्रियाः स्वजीवितविकल्पादनेकभेदा भिद्यन्ते । वानप्रस्था अपरिगृहीतजिनरूपा वस्त्रखण्डधारिणो निरतिशयतपः स्युद्यता भवन्ति । भिक्षवो जिनरूपधारिणो बहुधा भवन्ति । तद्यथा देशप्रत्यक्षवित्केवलभृदिह मुनिः स्यादृषिः प्राप्तऋद्धिरारूढश्रेणियुग्मो जिनयतिरनगारोऽपरः साधुवर्गः ॥ राजा ब्रह्मा च देवः परम इति ऋषिर्विक्रियाऽक्षीणशक्तिप्राप्तो बुध्द्यौषधीशो विविधनयपटुर्विश्ववेदी क्रमेण ॥ १ ॥ तत्क्रियाश्च प्राक्प्रबन्धेनोक्तास्तद्वद्वर्णक्रियाश्च व्याख्याताः ॥

अर्थ— त्याच्या त्याच्या कर्मभेदानें जसे चार वर्ण (क्षत्रिय, ब्राह्मण, वैश्य आणि शूद्र) सांगितले, त्याप्रमाणेंच कर्मभेदामुळें ब्रह्मचारी, गृहस्थ, वानप्रस्थ आणि भिक्षु असे चार आश्रम, उपासकाध्ययन नांवाच्या सातव्या अंगांत सांगितले आहेत. त्या आश्रमांचीं कर्में निरनिराळीं आहेत, तीं पुढीलप्रमाणें— त्यांत ब्रह्मचाऱ्याचें कर्म असें आहे कीं, क्षत्रिय, ब्राह्मण आणि वैश्य ह्या तीन वर्णांतील लोकांस द्विज असें ह्मणतात. ह्या द्विजापैकीं कोणत्याही वर्णाच्या मुलास, त्याच्या आईच्या उदरांत त्याचा गर्भ राहिल्यापासून आठवे वर्षीं जिनमंदिरांत नेऊन, त्याजकडून श्रीजिनाची पूजा करवून त्याचें मुंडन करावें. नंतर त्या मुलानें तिहेरी केलेली मुंज आपल्या कंबरेस बांधून सात पदरांनीं युक्त असें

यज्ञोपवीत धारण करावें. आणि स्थूलहिंसात्यागाचें व्रत आपल्या गुरूसमक्ष घ्यावें. ह्याचा विस्तार महापुराणांत सांगितला आहे. तो असा--- मस्तकावर शिखा धारण करणारा, पांढरें कौपीन नेसणारा, एक वस्त्र अंगावर घेणारा, आपल्या वेषांत बदल न करणारा आणि ब्रह्मचर्यव्रताचें चिन्ह जें यज्ञोपवीत तें धारण करणारा तो ब्रह्मचारी समजावा. तसेंच ह्याप्रमाणें जो ब्रह्मचारी असेल त्याचें त्याच्या आचरणाला योग्य असें दुसरें 'जिनदास, ज्ञानप्रकाश' वगैरे नांव ठेवावें. तो ब्रह्मचारी जर राजपुत्र नसेल तर त्यानें भिक्षा मागून आपलें जीवन करावें. राजपुत्रानें भिक्षा मागूं नये वगैरे. २ पूर्वीं सांगितलेल्या नित्य व नैमित्तिकक्रिया करणारा जो श्रावक तो गृहस्थ असें समजावें. ह्या गृहस्थांत दोन भेद आहेत. पहिला जातिक्षत्रिय आणि दुसरा तीर्थक्षत्रिय. त्यांत क्षत्रिय, ब्राह्मण, वैश्य आणि शूद्र हे जातिक्षत्रिय होत. आणि तीर्थक्षत्रियाचे पुष्कळ भेद आहेत. ३ जे दिगंबर झालेले नाहींत व लहानसें वस्त्र धारण करितात आणि उग्रतपश्चर्या करितात ते वानप्रस्थ. आणि ४ दिगंबर झालेले जे ते भिक्षु समजावे. ह्या भिक्षूंमध्यें बरेच भेद आहेत. ज्याला अवधि, मनःपर्यय किंवा केवलज्ञान आहे असा जो मुनि, तो ऋषि समजावा. ज्याला ऋद्धि प्राप्त झाली आहे व जो दोनी श्रेणीवर ( उपशमश्रेणी आणि क्षपकश्रेणी ह्यांवर ) चढलेला आहे, तो जिनयति; आणि बाकी राहिलेले सर्व साधु हे अनगार होत असें समजावें. त्यांत ऋषि चार प्रकारचे आहेत.

जो विक्रिया ऋद्धीनें युक्त असून विलक्षणशक्तिमान् असेल तो राजर्षि, बुद्धिऋद्धि आणि औषधऋद्धि ज्यास प्राप्त झाल्या असतील तो ब्रह्मर्षि, स्याद्वादांत जो निष्णात असेल तो देवर्षि; आणि जो सर्वज्ञ असेल तो परमर्षि असें समजावें.

अथारम्भविरतं द्वाभ्यामाह—

आतां पुढील दोन श्लोकांनीं आरंभविरताविषयीं सांगतात.

निरूढसप्तनिष्ठोऽङ्गि- ।
घाताङ्गत्वात्करोति न ॥
न कारयति कृष्यादी- ।
नारम्भविरतास्त्रिधा ॥ २१ ॥

टीका—न करोति न कारयति च । कोऽसावारम्भविरतः श्रावकः कान् कृष्यादीन् कृषिसेवावाणिज्यादिव्यापारान् । न पुनः स्नपनदानपूजाभिधानाद्यारम्भान् । तेषामङ्गिघाताङ्गत्वाभावात् । प्राणिपीडापरिहारेणैव तत्सम्भवात् । वाणिज्याद्यारम्भादपि तथा सम्भवस्तर्हि विनिवृत्तिर्न स्यादिति चेदेवमेतत् । कथं त्रिधा कस्मात् अङ्गिघाताङ्गत्वात् प्राणिवधनिबन्धनत्वात् । कथम्भूतो भूत्वा निरूढसप्तनिष्ठः निष्ठितप्राक्सप्तप्रतिमासंयमः । पुत्रादीन् प्रत्यनुमतेः कदाचिन्निवारयितुमशक्यत्वान्मनोवाक्कायैः कृतकारिताभ्यामेव सावद्यारम्भान्निवर्तते इत्यत्र तात्पर्यार्थः ॥

अर्थ— मागील सातही प्रतिमा ज्यास सिद्ध झाल्या आहेत असा जो श्रावक प्राणिहिंसेला कारणीभूत

असल्यानें, मनानें, वाणीनें व शरीरानें; कृष्यादि उद्योग दुसऱ्याकडून करवीत नाहीं व आपण करीत नाहीं, तो आरंभविरत समजावा. [ वरील श्लोकांत 'कृष्यादि ह्म० नांगरणें वगैरे' असा शब्द आहे, ह्यांतील वगैरे ह्या शब्दानें स्नान, दान, पूजा वगैरे क्रियांचें ग्रहण होत असल्यानें त्या क्रिया न करणें हें देखील आरंभविरताचें लक्षण होईल. परंतु, तसें समजूं नये. कारण, त्या स्नानादि क्रिया जरी 'वगैरे' ह्या शब्दानें गृहीत होतात, तथापि त्या हिंसेला कारणीभूत नसल्यानें, त्यांचा त्याग करण्याचें कारण नाहीं. आतां वाणिज्य ( व्यापार ) ही क्रिया देखील वरील वगैरे ह्या शब्दानें ग्रहण करण्यासारखी आहे. परंतु आरंभविरतिप्रतिमेंत तिचा त्याग करावा, किंवा न करावा असा संशय येतो. ह्याचें उत्तर असें आहे कीं, वाणिज्यदेखील जर हिंसेला कारणीभूत असेल, तर त्याचा अवश्य त्याग केलाच पाहिजे. आणि तें जर हिंसासाधन नसेल तर करण्यास हरकत नाहीं. आतां आरंभविरताच्या लक्षणांत 'कृष्यादि उद्योग दुसऱ्याकडून करवीत नाहीं' असें सांगितलें आहे, त्यांत अनुमति देण्यासंबंधानें कांहींच उल्लेख नाहीं, ह्यांत बीज काय असावें? अशीही एक शंका ह्या ठिकाणीं उत्पन्न होते. ती शंका कांहीं अंशीं योग्य आहे. कारण, आरंभविरत श्रावक हा जरी कृष्यादि उद्योग आपण करीत नाहीं व दुसऱ्यास करावयासही लावीत नाहीं; तथापि, पुत्रादिक आपण होऊनच करूं लागले असतां त्यांचें निवारण करीत नसल्यानें गर्भित अनुमति आहे असें

अनुमान करण्यास सवड आहे. ह्मणून वरील श्लोकांतील लक्षणांत करणें व करविणें ह्या दोहोंचाच संग्रह केला आहे. अनुमतीचा केला नाहीं. ]

एतदेव समर्थयते—

हा अष्टमप्रतिमेंत असलेला श्रावक कृष्यादिकर्माचा त्याग कां करितो ह्याचें कारण सांगतात.

> यो मुमुक्षुरघाद्बिभ्य-।
> त्त्यक्तुं भक्तमपीच्छति ॥
> प्रवर्तयेत्कथमसौ ।
> प्राणिसंहरणीः क्रियाः ॥ २२ ॥

टीका—कथं प्रवर्तयेत् कुर्यात् कारयेच्च । कोऽसावसावष्टमश्रावकः । काः क्रियाः । किंविशिष्टाः प्राणिसंहरणीः जीवघातिकाः । यः किं य इच्छति वांच्छति । किं कर्तुं त्यक्तुं प्रत्याख्यातुं । किं तत् भक्तमपि प्राणिसंहरणकारणं भोजनमपि । किं कुर्वन् बिभ्यत् । कस्मादघात्पापात् । किंविशिष्टः सन् मुमुक्षुः कृत्स्नकर्मविप्रमोक्षमिच्छुः ॥

अर्थ—जो मुक्त होण्याची इच्छा करणारा श्रावक, प्राणिसंहाराचें पातक आपल्यास लागूं नये, ह्मणून भिणारा असा होत्साता; अन्न देखील सोडण्याविषयीं इच्छीत असतो; तो अष्टम प्रतिमेंतील श्रावक, ज्यापासून प्राणिहिंसा होणें अगदीं अनिवार्य आहे, अशा क्रिया कशा बरें करील?

अथ परिग्रहविरतं सप्तश्लोक्या व्याचष्टे—

आतां; पुढील सात श्लोकांनीं परिग्रहविरताबद्दल सांगतात.

स ग्रन्थविरतो यः प्रा- ।
ग्व्रतव्रातस्फुरद्धृतिः ॥
नैते मे नाहमेतेषा- ।
मित्युज्झति परिग्रहान् ॥ २३ ॥

**टीका**—स भवति । किमाख्यो ग्रन्थविरतः । यः किं य उज्झति त्यजति । कान् परिग्रहान् वास्तुक्षेत्रादीन् दश । कथं इति एवं संकल्प्य । न भवन्ति । के एते वास्तुक्षेत्रादयोऽर्थाः । कस्य मे मम स्वत्वभोग्यत्वादिना सम्बद्धाः । तथा न भवाम्यहं । केषामेतेषां स्वामित्वभोक्तृत्वादीनां सम्बन्धी । किंविशिष्टः सन् प्रागित्यादि-प्राचां दर्शनिकादिप्रतिमाविषयाणां व्रतानां संयमविशेषाणां व्रातः सङ्घातः प्राग्व्रतव्रातः तेन स्फुरन्ती जाग्रती धृतिः सन्तोषो यस्य स तथोक्तः । किं च स्वाचाराप्रातिलोम्येन लोकाचारं प्रमाणयेदिति वचनात्सर्वत्र स्वस्वस्थानाविरोधेनैव पूर्वस्थानानुष्ठानमनुष्ठेयम् ॥

**अर्थ**— पूर्वी आचरण केलेल्या अनेक व्रतांच्या योगानें ज्याचा संतोष सर्वदा स्फुरण पावत आहे असा जो श्रावक, “ पुत्रदारादिक हे माझे कोणी नव्हेत , व मी ह्यांचा कोणी नव्हे ” असें समजून त्यांचा त्याग करितो ; तो ग्रंथविरत किंवा परिग्रहविरत समजावा.

एतस्य सकलदत्तिमुत्तरप्रबन्धेन व्याचष्टे—

आतां ; पुढील श्लोकांत ह्या परिग्रहविरताच्या सर्वस्व-दानाविषयीं ( सकलदत्तीविषयीं ) सांगतात.

अथाहूय सुतं योग्यं ।
गोत्रजं वा तथाविधम् ॥

ब्रूयादिदं प्रशान् साक्षा- ।
जातिज्येष्ठसधर्मणाम् ॥ २४ ॥

**टीका**—अथाधिकारे इतः सकलदत्तिरधिक्रियत इत्यर्थः । ब्रूयात् व्याहरेत् । कोऽसौ प्रशान् प्रशमपरो नवमः श्रावकः । कं सुतं पुत्रं । किंविशिष्टं योग्यं स्वभारक्षमं । किं कृत्वा आहूय आकार्य । वा अथवा योग्यपुत्राभावे । गोत्रजं भ्रातृतत्पुत्रादिकं । किंविशिष्टं तथाविधं योग्यपुत्रतुल्यं । किं ब्रूयादिदं वक्ष्यमाणं । कथं साक्षात् समक्षं । केषां जातिज्येष्ठसधर्मणां जातौ ब्राह्मणत्वादौ ज्येष्ठा मुख्या जातिज्येष्ठास्ते च ते सधर्माणश्च साधर्मिकास्तेषांम् ॥

**अर्थ**—त्या शांतांतःकरण अशा परिग्रहविरतानें आपल्या गुणवान् अशा पुत्रास अथवा योग्य पुत्र नसल्यास तशा प्रकारच्या (योग्य पुत्राप्रमाणें मानलेल्या) आपल्या गोत्रजास बोलावून आणून, त्याला आपल्या धर्मातील वरिष्ठ जातीच्या मंडळीसमक्ष पुढीलप्रमाणें सांगावें.

तातादयावदस्माभिः ।
पालितोऽयं गृहाश्रमः ॥
विरज्यैनं जिहासूनां ।
त्वमद्यार्हसि नः पदम् ॥ २५ ॥

**टीका**—हे तात स्वस्य पोष्यत्वसूचनगर्भं पुत्रादेः प्रियत्वामंत्रणमिदं । पालितो यथाविधि निर्वाहितः । कोऽसावयं प्रस्तुतो गृहस्थाश्रमो गृहस्थाचारः । कैरस्माभिः नवमप्रतिमानुष्ठाननिष्ठाभ्युद्यतैः । कथमद्ययावत् इदंदिनावधि । अद्य सम्प्रति । अर्हसि स्वीकर्तुमुचितोऽसि । कोऽसौ त्वं । किं तत् पदं त्रिवर्गसारगृहाचारानुवर्तनलक्षणं । केषां नः अस्माकं । किं चिकीर्षूणां जिहासूनां

त्यक्तुमिच्छूनां । कमेनं गृहाश्रमं । किं कृत्वा विरज्य भवाङ्गभोगेषु वैराग्यं गत्वा ॥

अर्थः—बाबारे! आजपर्यंत आह्मीं हा गृहस्थाश्रम यथाविधि चालविला. आतां विरक्त होऊन ह्याला सोडून जाण्याची इच्छा करणाऱ्या आमच्या स्थानावर आज तूं योग्य आहेस.

पुत्रः पुपूषोः स्वात्मानं ।
सुविधेरिव केशवः ॥
य उपस्कुरुते वप्तु- ।
रन्यः शत्रुः सुतच्छलात् ॥ २६ ॥

टीका—य उत्पन्नः पुनीते वंशं स पुत्र इति वचानात् स पुत्रो भण्यते । यः किं य उपस्कुरुते गृहादिममत्वच्छेदेनातिशयमादत्ते। कस्य वप्तुः पितुः । किं चिकीर्षोः पुपूषोः शोधयितुमिच्छोः । कं स्वात्मानं स्वचिद्रूपं । क इव कस्येत्याह– सुविधेरित्यादि । यथा उपश्चक्रे । कोऽसौ केशवः केशवो नाम श्रीमतीचरस्तत्पुत्रः । कस्य सुविधेः वृषभनाथस्य पूर्वभवे सुविधिनाम्नो राज्ञः । उक्तं चार्षे– नृपस्तु सुविधिः पुत्रस्नेहाद्गार्हस्थ्यमत्यजन् । उत्कृष्टोपासकस्थाने तपस्तेपे सुदुश्चरं ॥ उक्तलक्षणवैपरीत्ये पुत्रस्यापि शत्रुत्वं वक्तुमाह– भवति कोऽसौ अन्यः पुत्रः । किंविशिष्टः शत्रुः शातयिता इष्टविघातित्वात् । कस्मात् सुतच्छलात्पुत्रव्याजात् ॥

अर्थः—ज्याप्रमाणें सुविधिराजाचा केशव नांवाचा पुत्र होता त्याप्रमाणें जो– आपल्या आत्म्यास शुद्ध करूं इच्छिणाऱ्या पित्यास मदत करतो– तोच पुत्र होय! ह्यापेक्षां

दुसऱ्या प्रकारचा ( हे गुण ज्यांत नाहींत असा ) जो पुत्र तो पुत्रमिषानें आपणास शत्रु उत्पन्न झाला आहे असें समजावें. [ सुविधिराजा ह्मणजे जो पुढें दोन जन्म गेल्यावर श्रीवृषभनाथ झाला तो होय. ह्या सुविधिराजाची पूर्वजन्मीं श्रीमती नांवाची पत्नी होती. तीच पुढें सुविधिराजाच्या पुत्रत्वानें जन्मास आली. ही कथा महापुराणांत दहाव्या पर्वांत आहे. ]

उपसंहारमाह—

ह्याप्रमाणें गुणवान् पुत्राची प्रशंसा करून त्यास शेवटीं काय सांगावयाचें तें सांगतात.

तदिदं मे धनं धर्म्यं ।
पोष्यमप्यात्मसात्कुरु ॥
सैषा सकलदत्तिर्हि ।
परं पथ्या शिवार्थिनाम् ॥ २७ ॥

टीका—यत एवं तत्तस्मात् । आत्मसात्कुरु स्वायत्तं विधेहि त्वं । किं तत् इदं वर्तमानं मे मम सम्बधि धनं ग्रामसुवर्णादिकं धर्म्यं चैत्यालयपात्रदानादिकं पोष्यं च गृहिणीमातृपित्रादि । कुत एतदित्याह– हि यस्माद्वर्तते । काऽसौ सा सूत्रोक्ता एषा विधीयमाना सकलदत्तिरन्वयदत्त्यपराभिधाना कीदृशी पथ्या पथोऽनपेता रत्नत्रयानुगतेत्यर्थः । केषां शिवार्थिनां मुमुक्षूणां । कथं परं अत्यर्थम् ॥

अर्थः—गुणवान् पुत्राची वरील श्लोकांत सांगितल्याप्रमाणें योग्यता आहे ह्मणून, हें माझें द्रव्य, चैत्यालय वगैरे धार्मिक वस्तु आणि स्त्री, जननी वगैरे पोष्यजन

( ज्यांचें आपण पोषण केलें पाहिजे अशा जनांचा समूह ) हें सर्व तूं आपल्या ताब्यांत घे! असें त्यास सांगावें. ह्याप्रमाणें केलेलें हें सर्वस्वाचें दान, आपल्या कल्याणाची इच्छा करणाऱ्या भव्य श्रावकांस फार सुखकर होतें. ह्मणजे रत्नत्रयाची प्राप्ति करून देणारें असें होतें.

विदीर्णमोहशार्दूल- ।
पुनरुत्थानशङ्किनाम् ॥
त्यागक्रमोऽयं गृहिणां ।
शक्त्याऽऽरम्भो हि सिद्धिकृत् ॥ २८ ॥

टीका—वर्तते । कोऽसावयं प्रकृतत्यागक्रमः शनैः शनैर्बहिरन्तःसङ्गवर्जनं । केषां गृहिणाम् । किंविशिष्टानां । विदीर्णेत्यादि– विदीर्णस्तत्तन्निष्ठासौष्टवेन भिन्नः स चासौ मोहशार्दूलश्च ममकारव्याघ्रः तस्य पुनरुत्थानं भूयो निहन्तुमभियोगस्तं शङ्कन्ते विकल्पयन्त्यभीक्ष्णमिति तच्छंकिनस्तेषां । अर्थसमर्थनार्थमाह– हि यस्माद्भवति । कोऽसावारम्भः ऐहिकमामुत्रिकं वा अभिमतार्थं साधयितुमुपक्रमः । कया शक्त्या स्वसामर्थ्येन क्रियमाणः । किंविशिष्टो भवति सिद्धिकृत् अभिप्रेतार्थसाधकः ॥

अर्थः—पूर्वी सांगितलेल्या आठ प्रतिमारूपी शस्त्रांनीं जखमी केलेला ( बलहीन केलेला ) मोहरूपी व्याघ्र पुनः जोरानें उठेल कीं काय! असा संशय बाळगणाऱ्या गृहस्थाश्रमी श्रावकाचा हा त्यागक्रम ( मोहोत्पत्तीच्या साधनांचा त्याग करण्याचा अनुक्रम ) सांगितला आहे. ह्या क्रमानेंच त्यांनीं त्याग करावा. कारण, कोणतेंही कृत्य आपल्या शक्तीस अनुसरून केलें असतां तें कार्यसिद्धि करणारें होतें.

एवं व्युत्सृज्य सर्वस्वं ।
मोहाभिभवहानये ॥
किञ्चित्कालं गृहे तिष्ठे- ।
दौदास्यं भावयन्सुधीः ॥ २९ ॥

टीका —तिष्ठेदासीत । कोऽसौ सुधीः तत्त्वज्ञानसम्पन्नः । क्क गृहे । कं कालं । कियन्तं किंञ्चित्स्तोकं । किं कुर्वन् । भावयन्नभ्यस्यन् । किं तदौदास्यमुपेक्षां । कस्मै मोहेत्यादि— मोहेन ममत्वेन अभिभव उपेक्षाशैथिल्यं येन पृष्टो वा आरम्भादौ पुत्रादेरनुमतिं दास्यते—तस्य हानये निराकरणार्थं । किं कृत्वा व्युत्सृज्य विशेषणमिदं विधिपूर्वं वा त्यक्त्वा । किं तत्सर्वस्वं चेतनमचेतनं च स्वं वस्तु । कथमेवमित्थं । किञ्चित्कालमित्यनेन सिताम्बरपरिकल्पितं प्रतिमासु कालनियमं निराकरोति । तद्ग्रन्थानुवादस्तु ज्ञानदीपिकायां द्रष्टव्यः । गृहे तिष्ठेदित्यनेन स्वांगाच्छादनार्थं वस्त्रमात्रधारणममूर्च्छामस्य लक्षयति । तेन विना गृहेऽवस्थानानुपपत्तेः । तथा ह्यागमः “ मोत्तूणमत्तामित्तं परिग्गहं जो विवज्जदे सेसं । तं तत्थ विमुच्छण्णं करेदि जाण सो साववो णवमो ॥

अर्थ——मोक्षप्राप्तीविषयीं ज्याची बुद्धि उत्सुक आहे अशा श्रावकानें पुत्रादिकांविषयीं आपल्या मनांत असलेल्या प्रेमामुळें त्यांच्यासंबंधानें आपण केलेल्या उपेक्षेंत जी न्यूनता येते, ती न यावी ह्मणून, वर सांगितल्याप्रमाणें आपल्या सर्वस्वाचा त्याग करून, कांहीं कालपर्यंत उदासीनतेचा अभ्यास करीत घरांतच रहावें. [ ह्या श्लोकांत ‘ कांहीं कालपर्यंत ’ असें असल्यानें श्वेतांबरांनीं प्रतिमांविषयीं ‘ त्या अमुककालपर्यंतच असाव्यात ’ अशी जी

कालाची मर्यादा केली आहे, ती चुकीची आहे हें सिद्ध झालें. तसेंच 'घरांत रहावें' एवढेंच सांगितलें असल्यानें गर्भिताभिप्राय असा आहे कीं, फक्त शरीराच्या आच्छादनाकरितां वस्त्रधारण करावें. कारण वस्त्रधारणावांचून घरीं रहाणें योग्य होणार नाहीं. परंतु तेवढ्यावरून परिग्रहाचा स्वीकार करावा असें मात्र कोणी समजूं नये.

अथानुमतिविरतं सप्तश्लोक्या व्याचष्टे—

आतां; पुढील सात श्लोकांनीं अनुमतिविरताविषयीं सांगतात.

नवनिष्ठापरः सोऽनु- ।
मतिव्युपरतः सदा ॥
यो नानुमोदते ग्रन्थ- ।
मारम्भं कर्म चैहिकम् ॥ ३० ॥

टीका—स भवति । किंविशिष्टोऽनुमतिव्युपरतोऽनुमतिविरत इत्यर्थः । यः किं यो नानुमोदते नानुमन्यते । कं ग्रन्थं धनधान्यादिकं । तथा आरम्भं कृष्यादिकं । तथा कर्म व्यापारं । किंविशिष्टमैहिकं विवाहादिकं । कथं त्रिधा मनोवाक्कायैः । किंविशिष्टः सन् नवनिष्ठापरः दर्शनिकादिप्रातिमानवकानुष्ठाननिष्ठः ॥

अर्थ—आतांपर्यंत सांगितलेल्या नऊ प्रतिमांत आसक्त असलेला असा जो श्रावक, परिग्रह, कृष्यादि कर्मं व विवाहादिक ऐहिक कर्मं ह्यांविषयीं मनानें, वाणीनें अथवा शरीरानें केव्हांही अनुमति देत नाहीं तो अनुमतिविरत असा जाणावा.

एतस्य विधिविशेषमाह—

त्या अनुमतिविरताचा विशेष आचार सांगतात.

चैत्यालयस्थः स्वाध्यायं ।
कुर्यान्मध्याह्नवन्दनात् ॥
ऊर्ध्वमामन्त्रितः सोऽद्या- ।
द्गृहे स्वस्य परस्य वा ॥ २१ ॥

टीका—कुर्याद्विदध्यात्कोऽसावसौ अनुमतिविरतः । कं स्वाध्यायमागमाध्ययनं । किंविशिष्टः सन् चैत्यालयस्थः जिनगृहे तिष्ठन् । तथा अद्यात् भुञ्जीत सः । क्व गृहे । कस्य स्वस्य आत्मीयस्य पुत्रादेः । परस्य वा यस्य कस्य धार्मिकस्य । किंविशिष्टः सन् आमंत्रित आहूतः । कथमूर्ध्वमुपरिष्टात् । कस्मान्मध्याह्नवन्दनात् माध्याह्निककृतिकर्मणः पश्चात् ॥

अर्थ— त्यानें चैत्यालयांत राहून स्वाध्याय करावा आणि मध्यान्हकालचें सामायिक केल्यानंतर घरच्या अथवा परक्या मनुष्यानें बोलाविलें असतां आपल्या घरीं अथवा दुसऱ्याच्या घरीं भोजन करावें.

अस्यैवोद्दिष्टत्यागार्थं भावनाविशेषं श्लोकद्वयेनाह—

ह्या अनुमतिविरतानें आपल्यास इष्ट असलेल्या पदार्थाचा त्याग करण्याकरितां करावयाची भावना ( चिंतना ) दोन श्लोकांनीं सांगतात.

यथाप्राप्तमदन्देह- ।
सिध्द्यर्थं खलु भोजनम् ॥

देहश्च धर्मसिध्द्यर्थं ।
मुमुक्षुभिरपेक्ष्यते ॥ ३२ ॥
सा मे कथं स्यादुद्दिष्टं ।
सावद्याविष्टमश्नतः ॥
कर्हि भैक्षामृतं भोक्ष्ये ।
इति चेच्छेज्जितेन्द्रियः ॥ ३३ ॥

**टीका**—युग्मम् । इच्छेच्च आकांक्षेदसौ । किं इति एतत् । किं कुर्वन् अदन् भुञ्जानः । किं यथाप्राप्तं यद्यल्लब्धं तत्तत्संयमाविरोधेनाश्नन्नित्यर्थः । किंविशिष्टो यतः जितेन्द्रियः जितानि वशीकृतानीन्द्रियाणि स्पर्शनादीनि येन स जितेन्द्रियः । किमेतदिच्छेदित्यत्राह— खलु निश्चयेन । अपेक्ष्यते आकांक्ष्यते । किं तत् भोजनं । कैः मुमुक्षुभिः । किमर्थं देहसिध्द्यर्थं । शरीरवर्तनार्थं । तथा अपेक्ष्यते देहस्तैः । किमर्थं धर्मसिध्द्यर्थं रत्नत्रयनिष्पत्त्यर्थं । सा च धर्मसिद्धिः । कथं न कथमपि स्यात् । कस्य मे मम । किं कुर्वतोऽश्नतो भुञ्जानस्य । किं तत् उद्दिष्टं स्वोद्देशेन साधितमाहारं । किंविशिष्टं सावद्याविष्टं सावद्येनाधःकर्मणा संसृष्टं । ततः कर्हि कस्मिन्काले । भोक्ष्ये वल्भिष्येऽहं । किं तत् भैक्षामृतं भिक्ष्यन्त इति भिक्षाः याचितप्राप्ताहाराः भिक्षाणां समूहो भैक्षं भैक्षममृतमिवाजरामरत्वहेतुत्वात् ॥

**अर्थः**— ज्यानें सर्व इंद्रियें जिंकिलीं आहेत व जो मिळेल तसलें— संयमाची हानी ज्या योगानें होणार नाहीं असें— अन्न भक्षण करीत आहे अशा श्रावकानें— "मुक्त होण्याची इच्छा करणाऱ्यांनीं धर्मसिद्धिकारितां देहाची

इच्छा अवश्य केली पाहिजे. आणि त्या देहाच्या निर्वाहाकरितां अन्नाचीहि इच्छा केली पाहिजे. परंतु ती धर्मसिद्धि, स्वतःस प्रिय व निषिद्ध असें अन्न भक्षण करणाऱ्या मला कशी बरें होईल? मी भिक्षेनें मिळविलेलें अमृतासारखें गुणकारी अन्न कधीं बरें भक्षण करीन!!" अशी इच्छा करावी. (वरचेवर असें चिंतन करावें).

अस्यैव गृहत्यागविधिमाह—

आतां ह्यानें गृहत्याग करण्याचा विधि सांगतात.

पञ्चाचारक्रियोद्युक्तो ।
निष्क्रमिष्यन्नसौ गृहात् ॥
आपृच्छेत गुरून् बन्धून् ।
पुत्रादींश्च यथोचितम् ॥ ३४ ॥

टीका—आपृच्छेत संवदेदसौ । कान्पुत्रादीन् कथं यथोचितं यथार्हं । किं करिष्यन् निष्क्रमिष्यन् निष्क्रमितुमिच्छन् । कस्माद्गृहात् द्रव्यभावगेहात् । किंविशिष्टः सन् पञ्चाचारक्रियोद्युक्तः पञ्चानां ज्ञानाद्याचाराणां करणे तत्परः । अत्रायं विधिः— अहो कालविनयोपधानबहुमानानिह्नवार्थव्यञ्जनतदुभयसम्पन्नत्वलक्षणज्ञानाचार न शुद्धस्यात्मनस्त्वमसीति निश्चयेन जानामि । तथापि त्वां तावदाश्रयामि यावत्त्वत्प्रसादाच्छुद्धमात्मानमुपलभे । अहो निःशंकितत्वनिःकांक्षितत्वनिर्विचिकित्सितत्वानिर्मूढदृष्टित्वोपबृंहणस्थितीकरणवात्सल्यप्रभावनालक्षणदर्शनाचार शेषं पूर्ववत् ॥ अहो मोक्षमार्गप्रवृत्तिकारणपञ्चमहाव्रतोपेतकायवाङ्मनोगुप्तीर्याभाषैषणादाननिक्षेपणप्रतिष्ठापनसमितिलक्षणचारित्राचार शेषं पूर्ववत् । अहो

अनशनावमोदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशप्रायश्चित्तविनयवैयावृत्यस्वाध्यायध्यानव्युत्सर्गलक्षणतपआचार शेषं प्राग्वत् ॥ अहो समस्तेतराचारप्रवर्तकस्वशक्त्यनिगूहनलक्षणवीर्याचार शेषं प्राग्वत् । अथ यथोचितमेतदाचक्ष्महे ॥ तथाहि— अहो मदीयशरीरजनकस्यात्मन् अहो मदीयशरीरजनन्यात्मन् नायं मदात्मा युवाभ्यां जनितो भवतीति निश्चयेन युवां जानीतं । तत आपृष्टौ युवामिममात्मानं विमुञ्चत । अयमात्माऽद्योद्भिन्नज्ञानज्योतिरात्मानमेवात्मनोऽनादिजनकमुपसर्पति । तथा अहो मदीयशरीरबन्धुजनवर्त्तिन आत्मानः अयं मदात्मा न किञ्चनापि युष्माकं भवतीति निश्चयेन यूयं जानीथ । तत आपृष्टा यूयं शेषं पूर्ववत् । न वरं जनकमित्यस्य स्थाने बंधुमिति पठनीयं ॥ अहो मदीयशरीरपुत्रस्यात्मन् मदात्मनो न त्वं जन्यो भवसीति निश्चयेन त्वं जानीहि तत आपृष्टस्त्वमिममात्मानं विमुञ्च । शेषं प्राग्वत् । न वरं बंधुस्थाने जन्यं पठेत् ॥ अहो मदीयशरीररमण्या आत्मन् मदात्मा न त्वां रमयतीति निश्चयेन त्वं जानीहि तंत आपृष्टस्त्वामिममात्मानं विमुञ्च । अयमात्माऽद्योद्भिन्नज्ञानज्योतिः स्वानुभूतिमेवात्मनोऽनादिरमणीमुपसर्पतीत्यादि ॥

**अर्थः— पांच प्रकारचे आचार ( ज्ञानाचार, दर्शनाचार, चारित्राचार, तपआचार आणि वीर्याचार ) पाळण्याविषयीं तत्पर असलेल्या व गृहांतून निघून जाणाऱ्या ( गृहत्याग करणाऱ्या ) श्रावकानें, आपले मातापितर, बंधु व पुत्र इत्यादिकांस त्यांच्या त्यांच्या योग्यतेस अनुसरून विचारावें.**

विनयादाचारस्य भेदं विस्तरेण प्रागुक्तमिदानीं सुखस्मृत्यर्थं संक्षिप्य पुनराह—

**विनय आणि आचार ह्या दोहोंतील भेद पूर्वी विस्तारानें**

सांगितला आहे. तरी त्याची सहज स्मृति व्हावी ह्मणून ह्या ठिकाणीं पुनः संक्षेपानें सांगतात.

सद्दङ्निवृत्ततपसां ।
मुमुक्षोर्निर्मलीकृतौ ॥
यत्नो विनय आचारो ।
वीर्याच्छुद्धेषु तेषु तु ॥ ३५ ॥

टीका—भण्यते सूरिभिः । कोऽसौ विनयः । किं यत्नः प्रणिधानं । क्व निर्मलीकृतौ मलापनयने । सद्दङ्निवृत्ततपसां सम्यग्दर्शनज्ञानचारित्रतपसां । कस्य मुमुक्षोः न बुभुक्षोः । आचरस्तु भण्यते । किं यत्नः । केषु तेषु सद्दगादिषु चतुर्षु । किंविशिष्टेषु शुद्धेषु निर्मलीकृतेषु । कस्मात् वीर्यात् स्वशक्तिमनिगूह्य । एतेन पञ्चमो वीर्याचारः सूच्यते ॥

अर्थः—सम्यग्दर्शन, सम्यग्ज्ञान, सम्यक्चारित्र आणि तप ह्यांमधील दोष घालविण्याकरितां जो मुमुक्षूचा प्रयत्न तो 'विनय' होय. आणि ज्यांतील दोष गेले आहेत अशा त्या चारींविषयीं ( सम्यग्दर्शन, ज्ञान, चारित्र आणि तप ह्यांविषयीं ) जो प्रयत्न– ह्मणजे ह्या चारी गोष्टी आपल्या कृतींत आणूं लागणें– तो आचार होय.

सम्प्रत्युपसंहरति—

आतां आरंभ केलेलें अनुमतिविरताचें प्रकरण संपावितात.

इति चर्यां गृहत्याग- ।
पर्यन्तां नैष्टिकाग्रणीः ॥

निष्ठाप्य साधकत्वाय ।
पौरस्त्यपदमाश्रयेत् ॥ ३६ ॥

टीका—आश्रयेत् स्वीकुर्यात् । कोऽसौ नैष्ठिकाग्रणीः नैष्ठिकेषु दार्शनिकादिषु नवस्वग्रणीर्मुख्योऽनुमतिविरतः । किं तत् पदं स्थानं । किंविशिष्टं पौरस्त्यं एकादशमुद्दिष्टविरत्याख्यं । कस्मै साधकत्वाय आत्मशोधनार्थं । किं कृत्वा निष्ठाप्य परिसमाप्य । कां चर्यां संयमाचारं । किंविशिष्टां गृहत्त्यागपर्यन्तां गृहत्यागः पर्यन्ते अवसाने यस्याः तां । कथमित्येवम् ॥

अर्थः—सर्व प्रकारच्या नैष्ठिकांत मुख्य अशा श्रावकानें वर सांगितल्याप्रमाणें गृहत्याग करावयापर्यंतची क्रिया समाप्त करून आपल्या आत्म्याच्या शुद्धीकरितां पुढील ‘ उद्दिष्टविरति ’ नांवाच्या अकराव्या प्रतिमेचा स्वीकार करावा.

अथोद्दिष्टविरतस्थानं त्रयोदशभिः श्लोकैर्व्याचष्टे—

आतां उद्दिष्टविरति नांवाच्या प्रतिमेचें पुढील तेरा श्लोकांनीं व्याख्यान करितात.

तत्तद्व्रतास्त्रनिर्भिन्न- ।
श्वसन्मोहमहाभटः ॥
उद्दिष्टं पिण्डमप्युज्झे- ।
दुत्कृष्टः श्रावकोऽन्तिमः ॥ ३७ ॥

टीका—उज्झेत् त्यजेत् । कोऽसौ अन्तिमः श्रावकः । किंविविशिष्टः उत्कृष्टः अयमित्थंभूतनयादुत्कृष्टोऽनुमतिविरतस्तु नैगमनयादिति ज्ञापनार्थमुभौ भिक्षू तौ प्रकृष्टौ चेति प्रागुक्तमपीदं

विशेषणं पुनरुक्तं। किमुञ्झेत् पिण्डं भक्तं अपिशब्दादुपधिशयनासनादि। किंविशिष्टमुद्दिष्टं आत्मोद्देशेन कल्पितं। नवकोटिविशुद्धं स्वीकुर्यादित्यर्थः। किंविशिष्टः सन् तदित्यादि– तानि पूर्वोक्तानि व्रतानि यथास्वं निवृत्तिप्रवृत्तिरूपाण्याचरणानि तत्तद्व्रतानि तान्येवास्त्राणि प्रहरणानि तैर्भिन्नो नितरां विदारितः स चासौ श्वसन् किञ्चिज्जीवन् जिनरूपताप्राप्तिं प्रतिबन्धन् मोह एव महाभटो दुर्निवारवीरो यस्य स तथोक्तः॥

**अर्थ— पूर्वी सांगितलेल्या प्रत्येक व्रतरूपी शस्त्राच्या प्रहारानें घायाळ झाला असल्यामुळें आतां केवल श्वासोच्छ्वासमात्र करणारा ( आपलें कार्य करण्यास असमर्थ- दुर्बल- झालेला ) असा ज्याचा मोहरूपी महायोद्धा झाला आहे अशा शेवटच्या पदवीस प्राप्त झालेल्या उत्तम श्रावकानें, आपल्या भक्षणाकरितां तयार केलेलें अन्न देखील त्याग करावें. [ ह्या प्रतिमेचा स्वीकार करणाऱ्यास 'उद्दिष्टविरत' असें ह्मणतात. ]**

तद्भेदलक्षणार्थमाह—

**त्याचे भेद समजण्याकरितां सांगतात.**

स द्वेधा प्रथमः श्मश्रु-।
मूर्धजानपनाययेत्॥
सितकौपीनसंव्यानः।
कर्त्तर्या वा क्षुरेण वा॥ ३८॥

**टीका**—स उत्कृष्टश्रावको द्वेधा द्विविधो भवति। तत्राद्यस्य प्रथम इत्यादिना प्रबन्धेन विधिमभिधत्ते– अपनाययेत् च्छेदयेत्।

कोऽसौ प्रथम आद्य उद्दिष्टविरतः । कान् श्मश्रुमूर्धजान् कूर्चशिरः-केशान् । कया कर्त्तर्या कर्त्तरिकया । वा क्षुरेण नापितोपकरणेन वा । अत्र कर्त्तर्याऽपनायनं श्लाघ्यतरं शोभनाकांक्षणात् । तथा सितकौपीनसंव्यानो भवेत् श्वेतकक्षापटोत्तरीयपटश्चासौ स्यादित्यर्थः ॥

(२) स उत्कृष्ट उद्दिष्टविरतश्रावकः द्वेधा द्विविधो भवतीति सम्बन्धः । तत्र तावत् प्रथमः आद्यः किंविशिष्टः? सितकौपीन-संव्यानः कौपीनं गुह्यप्रच्छादनवस्त्रं संव्यानं उत्तरीयवस्त्रं कौपीनं च संव्यानं च कौपीनसंव्याने सिते वस्त्रे कौपीनसंव्याने यस्य स तथोक्तः । किं कुर्यात्? अपनापयेत् अन्येनोत्सारयेत् । कान् श्मश्रुमूर्धजान् । श्मश्रूणि कूर्चान् केशान् मूर्धजान् शिरःकेशान् न तु कक्षादिस्थान् । कया कर्तर्या कर्तरिकया । वा अथवा क्षुरेण रोमशस्त्रविशेषेण । अत्र द्वितीयो वाशब्दः समुच्चयेन ज्ञातव्यो यथा-सम्भवमिति ॥

अर्थ—त्या उद्दिष्टविरताचे दोन प्रकार आहेत, त्यांतील पहिल्या प्रकारच्या श्रावकानें पांढरी लंगोटी घालावी, व पांढरें वस्त्र पांघरावें आणि आपल्या मिशा, दाढी व डोकीवरील केश हे कातरीनें कातरवावेत. अथवा वस्तऱ्यानें काढवावेत.

स्थानादिषु प्रतिलिखेत् ।
मृदूपकरणेन सः ॥
कुर्यादेव चतुष्पर्व्या- ।
मुपवासं चतुर्विधम् ॥ ३९ ॥

टीका—प्रतिलिखेत् भूतलादिषु प्रमृज्यात् । कोऽसौ स प्रथम

उत्कृष्टः। केन मृदूपकरणेन मृदुना सुकुमारेण जन्त्वबाधकेनोपकरणेन वस्त्रादिना। केषु कर्त्तव्येषु स्थानादिषु ऊर्ध्वीभावोपवेशनसंवेशनादिषु। तथा कुर्यादेव अवश्यं विदध्यादसौ। कमुपवासमनशनं। किंविशिष्टं चतुर्विधं चतस्रो विधा आहारास्त्याज्या यस्मिन्नसौ चतुर्विधस्तं। चतुष्पर्व्यां मासि मासि द्वयोरष्टम्योर्द्वयोश्चतुर्दश्योः॥

अर्थ— त्यानें आपल्या निजण्यावसण्याच्या ठिकाणचे लोटणें वगैरे व्यापार फार मृदु पदार्थानें ह्मणजे वस्त्र वगैरेनें करावेत. कारण, ह्यांत हिंसा होण्याचा अधिक संभव असतो. तसेंच चारी पर्वांच्या दिवशीं (प्रत्येक महिन्यांतील शुक्लाष्टमी, कृष्णाष्टमी, शुक्लचतुर्दशी आणि कृष्णचतुर्दशी ह्या दिवशीं) भक्ष्य, पेय वगैरे चारी प्रकारच्या आहाराचा त्याग करावा.

स्वयं समुपविष्टोऽद्या-।
त्पाणिपात्रेऽथ भाजने॥
स श्रावकगृहं गत्वा।
पात्रपाणिस्तदङ्गणे॥ ४०॥

स्थित्वा भिक्षां धर्मलाभं।
भणित्वा प्रार्थयेत वा॥
मौनेन दर्शयित्वाऽङ्गं।
लाभालाभे समोऽचिरात्॥ ४१॥

निर्गत्याऽन्यद्गृहं गच्छे-।

न्दिक्षोद्युक्तस्तु केनचित् ॥
भोजनायार्थितोऽद्यात्त- ।
द्भुक्त्वा यद्भिक्षितं मनाक् ॥ ४२ ॥
प्रार्थयेतान्यथा भिक्षां ।
यावत्स्वोदरपूरणीम् ॥
लभेत प्रासु यत्राम्भ- ।
स्तत्र संशोध्य तां चरेत् ॥ ४३ ॥

टीका— स प्रथमोत्कृष्टोऽद्यात् भुञ्जीत। केन स्वयमात्मना। किंविशिष्टः सन् समुपविष्टः निश्चलनिविष्टः। क्व पाणिपात्रे हस्तपुटे। अथवा भाजने स्थाल्यादौ। इतः श्रावकेत्यादिना भिक्षणविधिमाह— प्रार्थयेत् भिक्षेत। कोऽसौ सः। कां भिक्षां। किं कृत्वा भणित्वा। कं धर्मलाभं धर्मलाभशब्दमुच्चार्येत्यर्थः। किं कृत्वा स्थित्वा उद्यो भूत्वा। क्व तदङ्गणे श्रावकगृहाग्रभागे। किंविशिष्टः सन् पात्रपाणिः भिक्षापात्रहस्तः। किं कृत्वा गत्वा प्राप्य। किं तत् श्रावकगृहं। वा अथवा। स प्रार्थयेत् भिक्षां। केन मौनेन। किं कृत्वा दर्शयित्वा दातृदृष्टिगोचरं कृत्वा। किं तत् अङ्गं स्वशरीरं। ततश्च गच्छेत् व्रजेत्। किं तत् गृहं। किंविशिष्टं अन्यत् अयाचितभिक्षं। किं कृत्वा निर्गत्य याचितभिक्षागृहान्निष्क्रम्य। कथं अचिरात् शीघ्रं। किंविशिष्टः समः रागद्वेषरहितः। क्व लाभालाभे भिक्षायाः प्राप्तावप्राप्तौ च। भिक्षोद्युक्तस्तु भिक्षां याचमानः। पुनः केनाचिच्छ्रावकेण। भोजनाय भोजनं कर्तुमार्थितः उपरुद्धः सन्। अद्यात् तद्गृहे भुञ्जीत। किं कृत्वा भुक्त्वा जेमित्वा। किं तत्तदन्नं। यत्किं यद्भिक्षितं गृहान्तरेषु याचितं। कियत् मनाक्

स्तोकं । बहौ भिक्षिते सति नान्यस्यान्नं भुञ्जीतेति भावः । अन्यथा परोपरोधाभावे । प्रार्थयेत याचेत सः । कां भिक्षां । कथं यावन्मर्यादीकृत्य । कां स्वोदरपूर्णीं भिक्षां स्वस्यैवोदरं यावत्या पूर्यते तावतीमेव प्रार्थयेत अन्यथा असंयमप्रसङ्गः । अथवा यावत् स्वोदरपूरणी भिक्षा भवति तावदेव प्रार्थयेतेति वाक्यभेदेन सम्बन्धः । सतश्च चरेत् गोवद्भुञ्जीतेति भावः । कां तां भिक्षां । किं कृत्वा संशोध्य सम्यक्शोधयित्वा । क्व तत्र श्रावकगृहे । यत्र किं यत्र लभेत् प्राप्नुयात्सः । किं तदम्भः पानीयं । किंविशिष्टं प्रासु प्रासुकं निर्जीवम् ॥

अर्थ— उद्दिष्टविरतश्रावकानें हात हेंच पात्र कल्पून अथवा निराळ्या पात्रांत अन्न घेवून निश्चल बसून भोजन करावें. तसेंच त्यानें हातांत पात्र घेऊन भिक्षेकरितां श्रावकांच्या घरांत जाऊन त्याच्या अंगणांत उभें रहावें ; व "धर्मलाभ" असा शब्द उच्चारून भिक्षा मागावी. किंवा प्राप्ति व अप्राप्ति ह्या संबंधानें बुद्धि सारखी ठेऊन, कांहीं न बोलतां, आपण भिक्षेकरितां आलों आहोंत येवढें घरांतील मनुष्यांना समजण्याकरितां आपलें शरीर त्यांच्या दृष्टीस पाडावें. आणि लगेंच त्या घरांतून निघून दुसऱ्या घरीं जावें. ह्याप्रमाणें भिक्षा मागत असतां जर कोणीं श्रावकानें आपल्या घरीं भोजन करण्याविषयीं प्रार्थना केली, तर, आपण भिक्षा मागून जें थोडेंसें अन्न मिळविलें असेल तें अन्न प्रथम भक्षण करावें. जर कोणीं भोजनास बोलाविलें नाहीं तर आपलें पोट भरेल इतकें अन्न भिक्षेनें मिळवावें. आणि ज्या ठिकाणीं निर्जंतुक असें पाणी मिळेल त्या ठिकाणीं तें भिक्षान्न शुद्ध करून खावें.

आकांक्षन्सँयमं भिक्षा- ।
पात्रप्रक्षालनादिषु ॥
स्वयं यतेत चादर्पः ।
परथाऽसँयमो महान् ॥ ४४ ॥

टीका—स चादर्पो विद्यातिशयाद्यनाहितमदः सन् । स्वयं यतेतात्मना यत्नं कुर्यात् । क भिक्षेत्यादि भिक्षापात्रस्य प्रक्षालनं धावनमादौ येषामासनस्थापनोच्छिष्टत्यजनादीनां तानि भिक्षापात्रप्रक्षालनादीनि कर्माणि तेषु । किं कुर्वन् आकांक्षन् अभिलषन् । कं संयमं प्राणिरक्षणं । परथा अन्यथा शिष्यादिना तद्विधाने भवत्यसंयमः । कीदृशो महान् भूयान् ॥

अर्थ— जीवहिंसा न व्हावी अशी इच्छा करणाऱ्या व ज्याला कोणत्याही प्रकारचा गर्व नाहीं अशा श्रावकानें भिक्षापात्र प्रक्षालन करणें वगैरे कृत्यांत स्वतःच मेहनत घ्यावी. कारण तसें न केलें असतां— ह्मणजे आपण स्वतः काम न करितां दुसऱ्याकडून करविलें असतां— त्यांत जास्त हिंसा होण्याचा संभव असतो.

ततो गत्वा गुरूपान्तं ।
प्रत्याख्यानं चतुर्विधम् ॥
गृह्णीयाद्विधिवत्सर्वं ।
गुरोश्चालोचयेत्पुरः ॥ ४५ ॥

टीका—ततः प्रकृतकर्मकरणानन्तरं । गुरोर्धर्माचार्यस्योपान्तं समीपं । गत्वा । गृह्णीयात्स्वीकुर्यात् सः । किं तत् चतुर्विधं चतुर्विधाहारविषयं । प्रत्याख्यानं नियमं । कथं विधिवत् यथा-

विधि। तथा आलोचयेत् निवेदयेत्सः। किं तत् सर्वं गमनात्प्रभृति स्वचेष्टितं। क पुरोऽग्रे। कस्य गुरोः। चशब्दाद्गोचरीं प्रतिक्रमणां कुर्यात् ॥

अर्थः— ह्याप्रमाणें केल्यानंतर त्या श्रावकानें गुरूच्या-जवळ जाऊन चारही प्रकारच्या आहाराच्या त्यागाचें व्रत यथाविधि स्वीकारावें. आणि आपला प्रत्येक व्यवहार त्या गुरूस कळवावा.

ह्याप्रमाणें ३८ व्या श्लोकांत उद्दिष्टविरत श्रावक दोन प्रकारचे ह्मणून जे सांगितले त्यांपैकीं अनेकगृहांत भिक्षा मागणारा असा जो पहिला उत्कृष्ट श्रावक त्याच्या भोजनाचा विधि येथपर्यंत सांगितला.

एवमनेकभिक्षानियमस्य प्रथमोत्कृष्टस्य भोजनविधिमुक्त्वा सम्प्रति तस्यैवैकभिक्षानियमस्य तदुपदिशति—

आतां; त्याचाच एकाच घरांत भिक्षा मागण्याविषयींचा नियम सांगतात.

यस्त्वेकभिक्षानियमो।
गत्वाऽद्यादनुमुन्यसौ॥
भुक्त्यभावे पुनः कुर्या-।
दुपवासमवश्यकम् ॥ ४६ ॥

टीका—यस्तु प्रथमोत्कृष्टो भवति। कीदृशः एकस्यामेकगृहसंबधिन्यां भिक्षायां नियमः प्रतिज्ञा यस्य स एकभिक्षानियमः। असावद्यात् भोजनं कुर्यात्। किं कृत्वा गत्वा दातृगृहं व्रजित्वा। कथमनुमुनि संयतस्य पश्चात्। एतेन प्रथमोत्कृष्टो द्वेधा स्यादनेकभिक्षानियम एकभिक्षानियमश्चेत्युक्तं प्रतिपत्तव्यं। स पुनः

कुर्यात् । कमुपवासं । कथमवश्यं नियमेन । क्व सति भुक्त्यलाभे सति तथाभोजनस्याप्राप्तौ ॥

**अर्थः**— ज्यानें एकाच घरांत भिक्षा मागण्याविषयीं नियम केला असेल त्या श्रावकानें भिक्षेकरितां गृहस्थाच्या घरीं जाऊन त्या ठिकाणीं जर कोणी संयमी मुनि प्राप्त झाला असेल तर त्याच्या भोजनानंतर आपण भोजन करावें. आणि जर भोजनाची प्राप्ति झाली नाहीं, तर त्या दिवशीं दुसऱ्या घरांत भिक्षा मागावयाची नसल्यानें अवश्य उपवास करावा.

तद्विधिविशेषमाह—

त्याचेंच विशेष कर्म सांगतात.

वसेन्मुनिवने नित्यं ।
शुश्रूषेत गुरूँश्चरेत् ॥
तपो द्विधाऽपि दशधा ।
वैयावृत्यं विशेषतः ॥ ४७ ॥

**टीका**—स नित्यं सर्वदा । मुनिवने सँयताश्रमे । वसेन्निवासं कुर्यात् । तथा शुश्रूषेत पर्युपासीत । कान् गुरून् धर्माचार्यादीन् । तथा चरेदनुतिष्ठेत् । किं तत्तपः । कथम्भूतं, द्विधाऽपि बाह्यमाभ्यन्तरं च । तथा स चरेत् । किं तत् वैय्यावृत्यं सँयमिनामापत्प्रतीकारं । कतिधा दशधा आचार्यादिगोचरत्वेन दशप्रकारं । केन विशेषतोऽतिशयेन अन्तरङ्गतपस्यस्य संगृहीतस्यापि पृथगुपदेश इतरतपस्त इदमतिशयेनासौ श्रावकश्चरेदितिज्ञापनार्थम् ॥

**अर्थः**— त्यानें सर्वदा संयमी मुनीच्या आश्रमांत रहावें.

गुरूंची सेवा करावी. अंतरंग व बाह्य अशी दोन्ही प्रकारची तपश्चर्या करावी, आणि दुसऱ्याचें दुःख घालविण्याचा यत्न विशेषतः करावा.

अथ द्वितीयमुद्दिष्टविरतं लक्षयति—

आतां; दुसऱ्या उद्दिष्टविरताचें लक्षण सांगतात.

तद्वद् द्वितीयः किन्त्वार्य- ।
सञ्ज्ञो लुञ्चत्यसौ कचान् ॥
कौपीनमात्रयुग्धत्ते ।
यतिवत्प्रतिलेखनम् ॥ ४८ ॥

टीका—भवति । कोऽसौ द्वितीय उत्कृष्टः । किंवत् तद्वत् प्रथमेन तुल्यक्रियः । किंतु विशेषेण लुञ्चति हस्तेनोत्पाटयत्यसौ । कान् कचान् कूर्चशिरःकेशान् । किं नामा आर्यसञ्ज्ञः आर्य इति सञ्ज्ञा नाम यस्यासौ । तथा धत्ते धारयत्यसौ । किं तत्प्रतिलेखनं पिच्छिकाख्यं संयमोपकरणं । किंवत् यतिवत् संयतेन तुल्यं । किंविशिष्टः सन् कौपीनमात्रयुक् कौपीनमात्रं गुह्यप्रच्छादनचेलखण्डमात्रं युनक्त्यात्मना योजयति नोत्तरीयादिकं यः स तथोक्तः ॥

अर्थः— दुसरा उद्दिष्टविरत हा बहुतेक सर्व क्रिया पहिल्या उद्दिष्टविरताप्रमाणेंच करीत असतो. विशेष एवढाच कीं, त्याला आर्य हें नांव असून तो मस्तकावरील वगैरे केश हातानें उपटून काढतो. आणि देहाच्या आच्छादनाकरितां दुसरें कोणतेंही वस्त्र न घेतां फक्त कौपीन धारण करीत असून यतीप्रमाणें पिच्छिकाही हातांत धारण करीत असतो.

स्वपाणिपात्र एवात्ति ।
संशोध्यान्येन योजितम् ॥
इच्छाकारं समाचारं ।
मिथः सर्वे तु कुर्वते ॥ ४९ ॥

टीका— तथा अत्ति जेमत्यसावाहारं । किंविशिष्टं योजितं समर्पितं क्क स्वपाणिपात्र एव निजहस्तपुटे न स्थाल्यादौ । केन अन्येन गृहस्थादिना । किं कृत्वा संशोध्य । एवमसाधारणमाचारमुक्त्वा साधारणं तमाह इच्छेत्यादि— कुर्वते विदधते । के सर्वे एकादशापि श्रावकाः । कं समाचारं । किंविशिष्टमिच्छाकारं इच्छामीत्येवंविधोच्चारणलक्षणं । कथं मिथः परस्परं । तुर्विशेषे ॥

अर्थ— आपला हात हेंच ज्याचें पात्र आहे असा तो श्रावक दुसऱ्यानें त्या पात्रांत टाकिलेलें अन्न निरखून पाहून भक्षण करतो. हे वर सांगितलेले एकादश प्रतिमामध्यें असलेले सर्व श्रावक "इच्छामि" ( आपण अमुक गोष्ट कराल असें मी इच्छितों ) ह्या पदाचा उपयोग करून एकमेकांशीं व्यवहार करितात.

इदानीं दशभिः पद्यैः शेषं संगृह्णन्नाह—

आतां; पुढील दहा श्लोकांनीं राहिलेल्या गोष्टींचा संक्षेपानें गोषवारा सांगतात.

श्रावको वीरचर्य्याहः- ।
प्रतिमातापनादिषु ॥
स्यान्नाधिकारी सिद्धान्त- ।
रहस्याध्ययनेऽपि च ॥ ५० ॥

टीका—न स्यात्कोऽसौ श्रावकः। किंविशिष्टोऽधिकारी योग्यः। क्व वीरेत्यादि—वीरचर्या स्वयं भ्रामर्या भोजनं, अहःप्रतिमा दिनप्रतिमा, आतापनादयस्त्रिकालयोगाः ग्रीष्मे सूर्याभिमुखं गिरिशिखरेऽवस्थानं, वर्षासु वृक्षमूले, शीतकाले रजन्यां चतुष्पथे, इत्येवंलक्षणास्त्रयः कायक्लेशविशेषाः। तथा सिद्धान्तस्य परमागमस्य सूत्ररूपस्य रहस्यस्य च प्रायश्चित्तशास्त्रस्याध्ययने पाठे श्रावको नाधिकारी स्यादिति सम्बन्धः॥

अर्थ—मधुकरी मागून भोजन करणें, दिनप्रतिमा करणें, तापनादि योग ( ग्रीष्मऋतूंत पर्वताच्या शिखरावर उघडें बसून सूर्याचा ताप सहन करणें, वर्षाऋतूंत उघड्या अंगानें झाडाखालीं बसणें व शीतकालांत रात्रीं चव्हाट्यावर उघडे निजणें वगैरे कायक्लेश. ) व जैनसिद्धान्ताच्या रहस्याचें अध्ययन करणें ह्या विषयीं गृहस्थाश्रमी श्रावक हा अधिकारी होत नाहीं.

दानशीलोपवासार्चा-।
भेदादपि चतुर्विधः॥
स्वधर्मः श्रावकैः कृत्यो।
भवोच्छित्त्यै यथायथम्॥ ५१॥

टीका—कृत्योऽनुष्ठेय। कोऽसौ स्वधर्मः आत्मन आचारः। कैः श्रावकैः देशसंयतैः। किंविशिष्टश्चतुर्विधोऽपि। कस्माद्दानशीलोपवासार्चाभेदात् दानं च शीलं चोपवासश्चार्चा च जिनादिपूजा ताभिर्भेदस्तस्मादपिशब्दान्न केवलं दर्शनव्रतादिभेदादेकादशधेति ग्राह्यं। कथं यथायथं स्वप्रतिमाचरणाविरोधेन। किमर्थं भवोच्छित्त्यै संसारनिरासार्थं॥

अर्थ— दान करणें, शील पाळणें, उपवास करणें व जिनपूजा करणें ह्याप्रमाणें चार प्रकारचा असलेला स्वधर्म श्रावकांनीं संसाराच्या नाशाकरितां यथायोग्य आचरण करावा.

इत उत्तरं व्रतरक्षायां यत्नविधानार्थं प्रबन्धेनाभिधत्ते—

आतां; पुढें व्रतांच्या रक्षणाकरितां प्रयत्न करण्याबद्दल आग्रहपूर्वक सांगतात.

प्राणान्तेऽपि न भंक्तव्यं ।
गुरुसाक्षि श्रितं व्रतम् ॥
प्राणान्तस्तत्क्षणे दुःखं ।
व्रतभङ्गो भवे भवे ॥ ५२ ॥

टीका—न भंक्तव्यं न खण्डनीयं श्रावकैः । किं तद्व्रतं । किंविशिष्टं श्रितं प्रतिपन्नं । कथं गुरुसाक्षि गुरवोऽत्र परमेष्ठिनो दीक्षागुरवः साधर्मिकमुख्याः स्थानवास्तुदेवताश्च गृह्यन्ते । गुरवः साक्षिणः साक्षाद्द्रष्टारो यत्र तद्गुरुसाक्षिकमित्यर्थः । क्व प्राणान्ते । व्रतभंगाकरणे प्राणनाशे सम्भवत्यपि किं पुनरितरापदि । व्रतभङ्गकरणे दुःखभूयस्त्वं दर्शयति । भवति । कोऽसौ प्राणान्तः । किं दुःखं । क्व तत्क्षणे तस्मिन्नेव समये नोत्तरत्र । व्रतभंगः पुनर्दुःखं भवति । क्व भवे भवे जन्मनि जन्मनि । बुद्धिपूर्वकव्रतभंगकरणेन सम्यक्त्वस्यापि विराधनादनन्तसंसारित्वस्यागमे प्रतिपादनात् ॥

अर्थ— आपल्या गुरूच्या समक्ष ग्रहण केलेलें व्रत प्राण जाण्याच्या प्रसंगींही सोडूं नये. कारण, प्राण जाण्यापासून त्या वेळेपुरतेंच दुःख होतें; आणि व्रतभंग झाला असतां प्रत्येक जन्मांत दुःख होतें.

शीलवान् महतां मान्यो ।
जगतामेकमण्डनम् ॥
स सिद्धः सर्वशीलेषु ।
यः सन्तोषमधिष्ठितः ॥ ५२ ॥

टीका—भवति। कोऽसौ शीलवान् शुचिचरित्रः श्रावको यतिर्वा। किंविशिष्टो मान्यः सत्कृत्यः। केषां महतामिंद्रादीनां। पुनः किंविशिष्टो जगतां लोकानामेकमुत्कृष्टं मण्डनमलंकरणं। शीलसिध्द्युपायमाह— स भवति। किंविशिष्टः सिद्धो निष्पन्नः प्रतीतो वा। केषु सर्वशीलेषु सकलसदाचारेषु। यः किं यो ऽधिष्ठितोऽध्यासितः। कं सन्तोषं धृतिं विषयवैतृष्ण्यमित्यर्थः॥

अर्थ—शुद्धाचारसंपन्न असा जो श्रावक असतो तो इंद्रादिदेवांनाही मान्य होतो; व तो सर्व जगाचा उत्कृष्ट अलंकारच होतो आणि जो सर्वदा संतोषानें रहातो त्यानें संपूर्ण सदाचार आपलासा केला असें समजावें.

तत्र न्यञ्चति नो विवेकतपनो नाञ्चत्यविद्यातमी ।
नाप्नोति स्खलितं कृपामृतसरिन्नोदेति दैन्यज्वरः ॥
विस्निह्यन्ति न सम्पदो न दृशमप्यासूत्रयन्त्यापदः।
सेव्यं साधुमनस्विनां भजति यः सन्तोषमंहोमुषम् ॥

टीका—योंऽहोमुषं पापापहं सन्तोषं भजति सेवते। किंविशिष्टं सेव्यं केषां साधूनां सिद्धिसाधकानां मनस्विनां चाभिमानिनां। तत्र सन्तोषसेवके पुंसि। नो न्यञ्चति नीचैर्न भवति आरूढारूढ एव भवतीत्यर्थः। कोऽसौ विवेकतपनः युक्तायुक्त-

विचारभास्करः । तथा न अंचति न प्रचरति । काऽसावविद्यातमी अज्ञानरात्रिः । तथा नाप्नोति न लभते । काऽसौ कृपामृतसरित् अनुकम्पापीयूषनदी । किं स्खलितं प्रवृत्तिप्रतिबन्धं । तथा नोदेति नोद्भवति । कोऽसौ दैन्यज्वरः दैन्यं विषादो ज्वर इव देहमनस्तापहेतुत्वात् । तथा न विस्निह्यन्ति न विरज्यन्ति । काः सम्पदः श्रियः । तथा नासूत्रयन्ति नारचयन्ति । का आपदो विपदः । कां दृशमपि किं पुनरालिंगनादिकम् ॥

अर्थ—साधु आणि अभिमानी पुरुष ह्यांनीं सेवन केलेल्या व पातकांचा नाश करणाऱ्या सन्तोषाचें जो पुरुष सेवन करतो; त्याचे ठिकाणीं सदसद्विचाररूपी सूर्य केव्हांही अस्त पावत नाहीं. अज्ञानरूपी रात्र त्या ठिकाणीं व्यापीत नाहीं. त्याची कृपारूपी अमृताची नदी कोठेंही अडथळा पावत नाहीं, ( अशाचे ठिकाणीं दया नेहमीं जागरूक असते. ) त्याचेठिकाणीं खेदरूपी ज्वर उत्पन्न होत नाहीं. तसेंच सर्वप्रकारच्या संपत्ति त्या पुरुषाविषयीं विरक्त होत नाहींत आणि विपत्ति ह्या त्या पुरुषाकडे ढुंकूनही पहात नाहींत.

स्वाध्यायमुत्तमं कुर्या- ।
दनुप्रेक्षाश्च भावयेत् ॥
यस्तु मन्दायते तत्र ।
स्वकृत्ये स प्रमाद्यति ॥ ५५ ॥

टीका—कुर्याच्छ्रावकः । कं स्वाध्यायं । किंविशिष्टमुत्तमं अध्यात्मादिविद्याविषयं प्रकृष्टशक्तिपर्यन्तं च । तथा भावयेत् अभ्यस्येत् । काः अनुप्रेक्षाः अनित्यत्वादिभावना द्वादश । चशद्धा-

दर्शनविशुध्द्यादिभावनाश्च षोडश। यस्तु यः पुनस्तत्र स्वाध्यायादौ। मन्दायते अलसो भवति। स प्रमाद्यति नावधत्ते नोत्सहत इत्यर्थः। क्व स्वकृत्ये आत्मकार्ये ॥

**अर्थ—कोणत्याही श्रावकानें उत्तम स्वाध्याय करावा आणि बारा प्रकारच्या अनुप्रेक्षांची भावना करावी. जो श्रावक ह्यांविषयीं आळस करतो तो आपल्या कृत्यांत चुकी करतो.**

**धर्मान्नान्यः सुहृत्पापा- ।**
**न्नान्यः शत्रुः शरीरिणाम् ॥**
**इति नित्यं स्मरन्न स्या- ।**
**न्नरः संक्लेशगोचरः ॥ ५६ ॥**

टीका—नरः पुमान्। संक्लेशगोचरो रागद्वेषमोहविषयः। न स्यात् रागादिभिर्नाभिभूयत इत्यर्थः। किं कुर्वन्नित्येवं। नित्यं सन्ततं। स्मरन् ध्यायन्। कथमित्याह—नास्ति। कोऽसौ सुहृत्। किंविशिष्टोऽन्यः। कस्मात् धर्मात् धर्म एवोपकर्तेत्यर्थः। तथा पापादन्यो नास्ति शत्रुरधर्म एवापकर्तेत्यर्थः। केषां शरीरिणां देहिनां ॥

**अर्थ—ह्या जीवांस धर्मावाचून दुसरा मित्र नाहीं; व पापावांचून दुसरा शत्रु नाहीं. ह्याप्रमाणें निरंतर ध्यान करणारा पुरुष रागद्वेषमोहादिकषायाचें स्थान होत नाहीं.**

**सल्लेखनां करिष्येऽहं ।**
**विधिना मारणान्तिकीम् ॥**

अवश्यमित्यदः शीलं ।
सन्निदध्यात्सदा हृदि ॥ ५७ ॥

**टीका**—सन्निदध्यात् संयोजयेत् । श्रावकः । किं तत् एतत्सल्लेखनाख्यं शीलं । क हृदि चित्ते । कथं सदा पश्चिमसल्लेखनां नित्यं भावयेदित्यर्थः । कथमिति किमिति अवश्यं नियमेन । करिष्ये विधास्येऽहं । कां सल्लेखनां बाह्याभ्यन्तरतपोभिः सम्यक्कायकषायकृशीकरणमाचरणं । किंविशिष्टां मारणांतिकीं मरणमेवान्तो मरणान्तः तद्भवमरणमित्यर्थः तत्र भवां । केन विधिना शास्त्रोक्तविधानेन ॥

**अर्थ**—मी मरणापर्यंत सल्लेखना यथाविधि अवश्य करीन अशाप्रकारचें हें सल्लेखना नांवाचें शील श्रावकानें आपल्या अंतःकरणांत सर्वदां चिंतित असावें [ ह्या श्लोकांतील सल्लेखना शद्बाचा " बाह्य व आभ्यन्तर अशा तपश्चर्येच्यायोगानें देह आणि कषाय यांना कमी कमी करीत जाणें " असा अर्थ समजावा. ]

सहगामीकृतं तेन ।
धर्मसर्वस्वमात्मनः ॥
समाधिमरणं येन ।
भवविध्वंसि साधितम् ॥ ५८ ॥

**टीका**—तेन पुंसा कृतं । किं तदात्मनः स्वस्य । धर्मसर्वस्वं व्यवहारनिश्चयरत्नत्रयं । किंविशिष्टं सहगामि आत्मना सह भवान्तरगन्तृ । येन किं येन साधितं निर्वर्तितं । किं तत्समाधिमरणं रत्नत्रयैकाग्रतया प्राणत्यागः । किंविशिष्टं भवविध्वंसि संसारनिर्मूलनशीलं ॥

अर्थ—जन्ममरणरूपी संसाराचा नाश करणारें असें समाधिमरण ज्यानें साधिलें त्या पुरुषानें धर्माचा मुख्यांश जें रत्नत्रय तें जन्मांतरीं आपल्या बरोबर येईल असें केलें.

यत्प्रागुक्तं मुनीन्द्राणां ।
वृत्तं तदपि सेव्यताम् ॥
सम्यङ्निरूप्य पदवीं ।
शक्तिं च स्वामुपासकैः ॥ ५९ ॥

टीका—प्राक् चतुर्थाद्यध्यायषट्के । मुनींद्राणां महामुनीनां । यद्वृत्तं समितिगुप्त्याद्याचरणमुक्तं तदपि न केवलं संसेव्यतामनुष्ठीयतां । कैरुपासकैः श्रावकैः । किं कृत्वा सम्यङ्निरूप्य अविपरीतं पर्यालोच्य । कां स्वामात्मीयां । पदवीं सँयमभूमिकां । शक्तिं च वीर्यं ॥

अर्थ—आपली प्रतिमा कोणती आहे ह्याचा नीट विचार करून व आपली शक्ति किती आहे ह्याचाही नीट विचार करून श्रावकांनीं चवथ्या अध्यायापासून पुढील सहा अध्यायांत जो महामुनींचा आचार सांगितला आहे तोही करावा.

प्रकृतमुपसंहरन्नौत्सर्गिकहिंसादिनिवृत्तिं प्रति देशयतिं प्रयुंक्ते—

आतां; आरंभिलेलें प्रकरण संपवून सर्वसंगपरित्यागामुळें जी हिंसेपासून निवृत्ति व्हावयाची तिजविषयीं देशसंयतश्रावकाची प्रवृत्ति करितात.

इत्यापवादिकीं चित्रां ।
स्वभ्यस्यन्विरतिं सुधीः ॥

कालादिलब्धौ क्रमतां ।
नवधौत्सर्गिकीं प्रति ॥ ६० ॥

**टीका**—क्रमतामुत्सहतां । कोऽसौ सुधीः तत्प्रज्ञानसम्पन्नः श्रावकः । कथं प्रति उद्दिश्य । कां विरतिं । किंविशिष्टामौत्सर्गिकीं उत्कृष्टं सर्जनमुत्सर्गः सर्वसंगत्यागः तत्र भवामौत्सर्गिकीं । कतिधा नवधा मनोवाक्कायैः प्रत्येकं कृतकारितानुमतानां त्यागेन नवप्रकारां । कस्यां कालादिलब्धौ कालदेशबलवीर्यसहायसाधनादिसामग्र्यां सत्यां । किं कुर्वन् स्वभ्यस्यन् सम्यग्भावयन् । कां विरतिं हिंसाविनिवृत्तिं । किंविशिष्टामापवादिकीं यतीनामपवादहेतुत्वादपवादो ग्रन्थस्तत्र भवां । पुनः किंविशिष्टां चित्रां नानाप्रकारां । कथमित्येवमुक्तप्रकारेण ॥

**अर्थ**—ह्याप्रमाणें सग्रंथाच्या उद्देशानें अनेकप्रकारांनीं सांगितलेल्या हिंसात्यागाचा चांगला अभ्यास करून बुद्धिमान् श्रावकानें योग्य कालाची प्राप्ति झाली असतां सर्वसंगपरित्यागामुळें होणाऱ्या नऊ प्रकारच्या ( हिंसा त्याग नऊ प्रकारांनीं संभवतो; मन, वाणी व शरीर ह्यांतील प्रत्येकानें हिंसा न करणें हे तीन प्रकार. ह्या तीन प्रकारांत करणें, करविणें व अनुमति देणें; हे प्रत्येकाचे तीन प्रकार; मिळून एकंदर नऊ प्रकार समजावे. याजबद्दल मागें चौथ्या अध्यायांत विस्तृत विचार केला आहे. ) हिंसात्यागाविषयीं औत्सुक्य धरावें.

साधकत्वं व्याकर्तुकामस्तत्स्वामिनं निर्दिशति—

आतां; साधकत्वाचें व्याख्यान करण्याच्या इच्छेनें, त्याला अधिकारी कोण होतो ! हें सांगतात.

इत्येकादशधाऽऽम्नातो ।
नैष्ठिकः श्रावकोऽधुना ॥
सूत्रानुसारतोऽन्त्यस्य ।
साधकत्वं प्रवक्ष्यते ॥ ६१ ॥

टीका—इत्येवं नैष्ठिकश्रावक एकादशधाऽस्माभिराम्नातः पारम्पर्योपदेशेन वर्णितः । अधुना साम्प्रतमित ऊर्ध्वं प्रवक्ष्यते प्रकर्षेण वर्णयिष्यते अस्माभिः । किं तत्साधकत्वं तृतीयं साधनाख्यं पदं । अंत्यस्योद्दिष्टविरतस्य श्रावकस्य कस्मात्सूत्रानुसारतः परमागममनुसृत्येति भद्रम् ॥

अर्थ—ह्याप्रमाणें नैष्ठिक श्रावकाचे अकरा प्रकार गुरुपरंपरेनें प्राप्त झाल्याप्रमाणें सांगितले. आतां, परमागमसूत्रांस अनुसरून अकराव्या प्रतिमेंत असलेल्या श्रावकाच्या साधकत्वाचें उपपादन पुढील अध्यायांत करूं.

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मटीकायां
भव्यकुमुदचन्द्रिकासञ्ज्ञायामादितः षोडशः
प्रक्रमाच्च सप्तमोऽध्यायः

अध्याय सातवा समाप्त.

---

## ॥ अथाष्टमोऽध्यायः ॥

अथ सल्लेखनाविधिमभिधातुकामस्तत्प्रयोक्तारं लक्षयन्नाह—

आतां सल्लेखनेचा प्रकार सांगण्याकरितां ती करण्यास योग्य जो श्रावक त्याचें स्वरूप सांगतात.

देहाहारेहितत्यागात् ।
ध्यानशुध्याऽऽत्मशोधनम् ॥
यो जीवितान्ते सम्प्रीतः ।
साधयत्येष साधकः ॥ १ ॥

टीका—भवत्येष साधकः । यः किं यः साधयति निर्वर्त्तयति । किं तत् आत्मशोधनं आत्मनोऽन्तस्तत्त्वस्य शोधनं शुद्धिं मोहरागद्वेषापगमं रत्नत्रयपरिणतिमित्यर्थः । क्व जीवितान्ते प्राणनाशे प्राणेषु नश्यत्स्वित्यर्थः । किंविशिष्टः सन् सम्प्रीतः सर्वाङ्गीणध्यानसमुत्थानन्दयुक्तः । कया तत्साधयति? ध्यानशुध्या ध्यानस्यैकाग्रचिन्तानिरोधस्य शुद्धिरार्तरौद्रपरित्यागेन स्वात्मन्यवस्थानं निर्विकल्पसमाधिरित्यर्थः । कस्मात् देहाहारेहितत्यागात् देहत्यागः शरीरममत्ववर्जनमाहारत्यागश्चतुर्विधाहारप्रत्याख्यानमीहितत्यागो मनोवाक्कायव्यापारव्यावर्तनं देहश्चाहारश्च ईहितं च देहाहारेहितानि तेषां त्यागस्तस्मात् ॥

अर्थ—जो श्रावक, सर्वप्रकारें संतुष्ट असा होत्साता, देहाविषयींचें ममत्व, चार प्रकारचा आहार आणि पूर्वी आपल्यास प्रिय असलेले शारीरिक, मानसिक व वाचिक व्यापार ह्या सर्वांचा त्याग करून प्राण जाण्याचा प्रसंग

जरी आला तथापि आत्म्याची शुद्धीच संपादन करितो; तो साधक जाणावा.

कस्य श्रावकत्वेन कस्य च यतित्वेन मोक्षमार्गप्रवृत्तिः कर्तव्येति पृच्छन्तं प्रत्याह—

आतां; यती होऊन मोक्षमार्गाचें साधन कोणीं करावें, व श्रावकस्थितींत राहूनच मोक्षमार्गाचें साधन कोणीं करावें? असा प्रश्न करणाऱ्यास उत्तर सांगतात.

सामग्रीविधुरस्यैव ।
श्रावकस्यायमिष्यते ॥
विधिः सत्यां तु सामग्र्यां ।
श्रेयसी जिनरूपता ॥ २ ॥

टीका—इष्यते अभिमन्यते पूर्वाचार्यैः । कोऽसावयवमुक्तो वक्ष्यमाणश्च विधिः क्रियाकल्पः । कस्य श्रावकस्य । किंविशिष्टस्य सामग्रीविधुरस्यैव जिनलिङ्गग्रहणायोग्यत्रिस्थानकदोषादियुक्तस्य नान्यस्य । सामग्र्यां तु सत्यां भवति । काऽसौ जिनरूपता जिनलिङ्गग्रहणं । किंविशिष्टा श्रेयसी प्रशस्यतरा ॥

अर्थ— हा पूर्वी सांगितलेला व पुढें सांगावयाचा असा सर्व क्रियासमूह, ज्याच्या ठिकाणीं यतित्वाला योग्य अशी सामग्री ( निर्दोषता ) नसेल त्या श्रावकाकरितां आहे, आणि जर सामग्री असेल तर जिनरूपता (यतित्व) हीच कल्याणकारक आहे; असें पूर्वाचार्यांचें मत आहे.

जिनलिङ्गस्वीकारकारणमाह—

जिनाचें चिन्ह स्वीकारण्याचें कारण सांगतात.

किञ्चित्कारणमासाद्य ।
विरक्ताः कामभोगतः ॥
त्यक्त्वा सर्वोपधिं धीराः ।
श्रयन्ति जिनरूपताम् ॥ ३ ॥

टीका—श्रयन्ति स्वीकुर्वन्ति । के ते धीराः श्रावकाः परीषहोपसर्गसहने बद्धकक्षा । कां जिनरूपतां । किं कृत्वा त्यक्त्वा व्युत्सृज्य । कं सर्वोपधिं बाह्याभ्यन्तरसङ्गं । किंविशिष्टाः सन्तः विरक्ताः व्यावृत्तचेतसः । काभ्यां कामभोगतः कामः स्पर्शनरसनविषयानुभवः भोगो घ्राणचक्षुःश्रवणविषयानुभवः कामश्च भोगश्च कामभोगौ ताभ्यां । किं कृत्वा आसाद्य प्राप्य । किं कारणं । किंविशिष्टं किञ्चित् तत्त्वज्ञानेष्ववियोगशत्रुपराजयादीनामन्यतमम् ॥

अर्थ—सर्वप्रकारचे उपसर्ग व परीषह सोसण्यास तयार असलेले थोर पुरुष, तत्त्वज्ञानाच्या प्राप्तीस प्रतिबंध होणें, अगर शत्रूपासून आपला पराजय होणें, अशा प्रकारचें कांहीं तरी निमित्त प्राप्त झाल्यानें पंचज्ञानेंद्रियांपासून मिळणाऱ्या सुखाविषयीं विरक्त होऊन सर्व प्रकारच्या उपाधींचा त्याग करून जिनलिंगाचा स्वीकार करितात.

जिनरूपतास्वीकारमाहात्म्यमाह—

जिनलिंग स्वीकाराचें माहात्म्य सांगतात.

अनादिमिथ्यादृगपि ।
श्रित्वाऽर्हद्रूपतां पुमान् ॥

साम्यं प्रपन्नः स्वं ध्यायन् ।
मुच्यतेऽन्तर्मुहूर्ततः ॥ ४ ॥

**टीका**—मुच्यते द्रव्यभावकर्मभिः स्वयमेव विश्लिष्यते । कोऽसौ पुमान् द्रव्यतः पुल्लिंग एव । कस्मात् अन्तर्मुहूर्ततः किञ्चिदूननाडीद्वयमात्रात् । किं कुर्वन् ध्यायन् समादधानः । कं स्वमात्मानं । किंविशिष्टः सन् प्रपन्नः प्राप्तः । किं तत् साम्यं माध्यस्थ्यं । किं कृत्वा श्रित्वा । कामर्हद्रूपतां निर्ग्रन्थलिङ्गं । किंविशिष्टोऽपि अनादिमिथ्यादृगपि न केवलं सादिमिथ्यादृष्टि-रविरतसम्यग्दृष्टिः श्रावको वेत्यपिशब्दार्थः । उक्तं च– आराध्य चरणमनुपममनादिमिथ्यादृशोऽपि यत्क्षणतः । दृष्टा विमुक्तिभाज-स्ततोऽपि चारित्रमत्रेष्टम् ॥ १ ॥

**अर्थ**—पहिल्यापासून मिथ्यादृष्टि असलेला असा देखील जीव निर्ग्रंथचिन्हांचा स्वीकार करून सर्वत्र समबुद्धी पावून आत्मचिंतन करूं लागला असतां अंतर्मुहूर्तकालांत मुक्त होतो.

शरीरस्य स्थायिनः पातने पातोन्मुखस्य च शोचने निषेधमुपपादयति–

आतां; कांहीं कालपर्यंत टिकणाऱ्या शरीराचा मुद्दाम नाश करणें व कालक्रमानें नाश पावूं लागलेल्या शरीराविषयीं शोक करणें ह्या दोन्हींचाही निषेध करितात.

न धर्मसाधनमिति ।
स्थास्नु नाश्यं वपुर्बुधैः ॥
न च केनापि नो रक्ष्य- ।

मिति शोच्यं विनश्वरम् ॥ ५ ॥

टीका—न नाश्यं न विश्लेष्यं । किं तद्वपुः शरीरं । कैर्बुधैः तत्त्वज्ञैः । किंविशिष्टं स्थास्नु साधुत्वेन रत्नत्रयानुष्ठानसाधकत्व-लक्षणेन तिष्ठत् । कथं कृत्वा धर्मसाधनमिति रत्नत्रयासिध्युपायो यतः । न च नापि शोच्यं शोचनीयं वपुर्बुधैः । किंविशिष्टं विनश्वरं विशेषेण नश्यत् तद्भवमरणं प्राप्नुवदित्यर्थः । कथं कृत्वा केनापि नो रक्ष्यमिति योगीन्द्रदेवेन्द्रदानवेन्द्रादिनाऽपि रक्षयितु-मशक्यं यतः । उक्तं च- गहनं न शरीरस्य हि विसर्जनं किं तु गहनमिह वृत्तम् ॥ तन्न स्थास्नु विनाश्यं न नश्वरं शोच्य-मिदमाहुः ॥ १ ॥

अर्थ— कांहीं कालपर्यंत टिकाऊ असें हें शरीर धर्माचें मुख्य साधन असल्यानें शहाण्या मनुष्यानें त्याचा नाश करूं नये. तसेंच तें नाशोन्मुख झालें असतां तें कोणा-च्यानेंही राखितां यावयाचें नाहीं; ह्मणून; त्याकरितां शोकही करूं नये.

कायस्यानुवर्तनोपचरणपरिहरणयोग्यतोपदेशार्थमाह—

देह हा पोषण, उपचार आणि त्याग ह्या तीन्हींसही योग्य आहे, असें सांगतात.

कायः स्वस्थोऽनुवर्त्यः स्यात् ।
प्रतीकार्यश्च रोगितः ॥
उपकारं विपर्यस्यँ- ।
स्त्याज्यः सद्भिः खलो यथा ॥ ६ ॥

टीका—स्यात् कोऽसौ कायः । किंविशिष्टोऽनुवर्त्यः पथ्या-

हारविहाराभ्यां स्वास्थ्य एव स्थापनीयः। कैः सद्भिः साधुभिः। किंविष्टः सन् स्वस्थोऽविकृतः। तथा प्रतीकार्यो योग्यौषधादिनोपचरणीयः। कोऽसौ कायः। कैः सद्भिः। किंविशिष्टः सन् रोगितः सँजातरोगः। तथा त्याज्यः। कोऽसौ कायः। सद्भिः। किं कुर्वन् विपर्यस्यन् अन्यथाकुर्वन्। कमुपकारं स्वास्थ्यायारोग्याय चेक्रीयमाणमुपक्रमं अधर्मसाधनं व्याधिं तद्वृद्धिं च गच्छन्नित्यर्थः। क इव खलो दुर्जनः पिण्याको वा यथा॥

अर्थ— सत्पुरुषांनीं जोंपर्यंत शरीर स्वस्थ असेल तोंपर्यंत त्याचें पोषण करावें, तें व्याधियुक्त झालें तर त्याला उपचार करावा; आणि केलेला उपचार व्यर्थ होऊन त्यांत अधिकच रोगवृद्धि होऊं लागेल तर, एखाद्या दुष्ट मनुष्याप्रमाणें त्याचा त्याग करावा.

शरीरार्थं धर्मोपघातस्यात्यन्तानिषेधमाह—

शरीराच्या रक्षणाकरितां धर्माचा विच्छेद करणें ह्याचा निषेध करितात.

नावश्यं नाशिने हिंस्यो।
धर्मो देहाय कामदः॥
देहो नष्टः पुनर्लभ्यो।
धर्मस्त्वत्यन्तदुर्लभः॥ ७॥

टीका—न हिंस्यो नोपहन्तव्यः सद्भिः। कोऽसौ धर्मः। कस्मै देहाय। किंविशिष्टाय अवश्यं नाशिने निश्चितनाशाय। किंविशिष्टः कामदः समीहितार्थप्रदो यतः। किञ्च लभ्योऽवश्यप्राप्यः। कोऽसौ देहः। कथं पुनः। किंविशिष्टो नष्टो नाशं

गतः । देहमात्रापेक्षयेदमुच्यते, धर्मस्तु प्रक्रमात्समाधिमरणोऽत्यन्तदुर्लभो भवति । यत्नशतेनापि लब्धुमशक्य इत्यर्थः ॥

अर्थ—केव्हांतरी निश्चयानें नाश पावणाऱ्या देहाकरितां इष्ट फल देणारा धर्म टाकूं नये. कारण, देह नष्ट झाला असतां पुनः मिळतो; परंतु धर्म हा अत्यंत दुर्लभ आहे.

विधिवत्प्राणाँस्त्यजत आत्मघातशङ्कामपनुदति—

**यथाविधि प्राणत्याग करणाऱ्याची आत्मघाताची शंका दूर करितात.**

न चात्मघातोऽस्ति वृष- ।
क्षतौ वपुरुपेक्षितुः ॥
कषायावेशतः प्राणान् ।
विषाद्यैर्हिंसतः स हि ॥ ८ ॥

टीका—न चास्ति । कोऽसावात्मघातः स्ववधलक्षणो दोषः । कस्य उपेक्षितुः यथाविधि भक्तप्रत्याख्यानादिना साधुत्वेन त्यजतः साधोः । किं तद्वपुः शरीरं । कस्यां सत्यां वृषक्षतौ प्रतिपन्नव्रतविनाशहेतौ उपस्थिते सतीत्यर्थः । हि यस्माद्भवति । कोऽसौ सः आत्मघातः । कस्य पुंसः । किं कुर्वतो हिंसतो व्यपरोपयतः । कान् प्राणान् । कैः विषाद्यैः गरलशस्त्रश्वासनिरोधजलाग्निप्रवेशलंघनादिभिः । कस्मात् कषायावेशतः क्रोधादिपरिणामवशात् ॥

अर्थ—स्वधर्माचा नाश होण्याच्या प्रसंगीं देहाचा त्याग करणाऱ्याची (मरणाऱ्याची) आत्महत्या होत नाहीं; आणि क्रोधादिकषायांच्या विषादिकांच्या योगानें प्राणत्याग करणाऱ्यास मात्र आत्महत्या केल्याचा दोष लागतो.

एवं संयमविनाशहेतुसान्निधाने कायत्यागं समर्थ्येदानीं कालोपसर्गमरणनिर्णयपूर्वकप्रायोपवेशनेन तत्तन्निष्ठासाफल्यविधापनार्थमाह-

**ह्याप्रमाणें आपण स्वीकारलेल्या व्रताचा नाश होण्याचा प्रसंग आला असतां, देहाचा त्याग करण्याचें उपपादन करून, आतां; योग्यकाल किंवा रोगादिकांची पीडा प्राप्त होऊन 'मी मरणार' असा निश्चय झाला असतां उपोषणादिकानें त्या त्या व्रताची सफलता होते; असें दाखविण्याकरितां सांगतात.**

कालेन वोपसर्गेण ।
निश्चित्यायुः क्षयोन्मुखम् ॥
कृत्वा यथाविधि प्रायं ॥
तास्ताः सफलयेत्क्रियाः ॥ ९ ॥

टीका—सफलयेत् फलवतीः कुर्यात् साधुः । काः क्रियाश्चेष्टाः । किंविशिष्टाः तास्ताः दर्शनिकादिप्रतिमाविषयाः नित्यनैमित्तिकीश्च । किं कृत्वा यथाविधि विधिना । प्रायं सन्यासयुक्तानशनं कृत्वा । किं कृत्वा निश्चित्य सम्यक् निर्णीय । किं तदायुर्जीवितं । किंविशिष्टं क्षयोन्मुखं प्रत्त्यासन्नविनाशं । केन कालेन— स्थितिबन्धच्छेदहेतुना समयेन । वा अथवा उपसर्गेण दुर्निवाराघकारिरोगशत्रुप्रहारादिलक्षणेन कृच्छ्रेण सुनिश्चिते मरणे ॥

**अर्थ—वृद्धपणामुळें अथवा अनिवार्य अशा रोगामुळें आपलें जीवित आतां खचित नष्ट होणार असा निश्चय झाला असतां सुज्ञश्रावकानें यथाविधि उपोषण करून पूर्वी आपण स्वीकारलेलीं तीं तीं व्रतें सफल करावींत.**

स्वाराधनापरिणत्त्या कायत्त्यागे मुक्तिः करस्थेत्युपदेशार्थमाह—

आपण स्वीकारलेल्या व्रतांची संपूर्णता करण्यांत देह-त्याग झाला असतां ( मरण आलें असतां ) मोक्ष आपल्या हातांत आहे असा उपदेश करितात.

देहादिवैकृतैः सम्यङ्- ।
निमित्तैस्तु सुनिश्चिते ॥
मृत्यावाराधनामग्न- ।
मतेर्दूरे न तत्पदम् ॥ १० ॥

टीका—नास्ति । किं तदशरीरताप्राप्तिलक्षणं पदं । क दूरे विप्रकर्षे । कतिपयभवलभ्यं निर्वाणमित्यर्थः । कस्य आराधना-मग्नमतेः निश्चयाराधनापरिणतमनसः पुंसः । क सति मृत्यौ । किंविशिष्टे सुनिश्चिते । कैः देहादिवैकृतैः शरीरसंशीलादिविकृतिभिः स्वस्थातुरारिष्टैरित्यर्थः । न केवलं तैः सम्यङ्निमित्तैश्च समीचीन-भाविशुभाशुभज्ञानोपायैश्च कर्णपिशाचिकादिविद्याज्योतिषोपश्रुति-शकुनादिभिः ॥

अर्थ— देहांत उत्पन्न होणारे अनेक विकार व दुःशकुन ह्यांच्या योगानें आपल्यास आतां खचित मृत्यु प्राप्त होणार असा निश्चय झाला असतां, आपण स्वीकारलेल्या संय-माची सांगता करण्याकडे ज्याचें अंतःकरण गढून गेलें आहे अशा श्रावकास मोक्षपद दूर नाहीं !

उपसर्गमरणोपनिपाते प्रायविधिमाह—

रोगादिकांनीं 'अकालीं मरण येईल' असें वाटलें असतां भोजनत्याग करण्याविषयीं सांगतात.

भृशापवर्तकवशात् ।
कदलीघातवत्सकृत् ॥
विरमत्यायुषि प्राय-।
मविचारं समाचरेत् ॥ ११ ॥

**टीका**— समाचरेत्सम्यक्कुर्यान्मुमुक्षुः । किं प्रायं । किंविशिष्टमविचारं विचरणं नानागमनमर्हादिनानाप्रकारप्रवृत्तिपरिणमनं विचारस्तेन रहितं प्रायं भक्तप्रत्याख्यानं सार्वकालिकसंन्यासं शुद्धस्वात्मध्यानपरत्वमित्यर्थः । क्व सत्यायुषि भवधारणकारणे कर्मणि । किं कुर्वति सकृदक्रमेण विरमत्यपवर्तमाने नश्यति । कस्मात् भृशापवर्तकवशात् आगाढापमृत्युकारणसामर्थ्यात् । किंवत्कदलीघातवत् छिद्यमानकदलीकाण्डे यथा ॥

**अर्थ**—आपल्यास अपमृत्यु आणणाऱ्या रोगादि कारणांच्या सामर्थ्यामुळें आपलें आयुष्य कांपलेल्या केळीच्या झाडाप्रमाणें नाश पावणार असें वाटलें असतां कोणत्याही प्रकारचा विचार न करतां भोजनाचा त्याग करावा. ( उपोषण करूं लागावें. )

स्वपाकच्युत्या स्वयं पातोन्मुखे देहे सल्लेखना विधेयेत्युपदिशति—

योग्यकालीं देह मरणोन्मुख झाला असतां सल्लेखना करण्याविषयीं उपदेश करितात.

क्रमेण पक्त्वा फलवत् ।
स्वयमेव पतिष्यति ॥
देहे प्रीत्या महासत्त्वः ।
कुर्यात्सल्लेखनाविधिम् ॥ १२ ॥

टीका— कुर्यात्कोऽसौ । महासत्त्वः अनिवार्यधैर्यवीर्यः । कं सल्लेखनाविधिं । कया प्रीत्या प्रमोदेन । क सति देहे । किं करिष्यति पतिष्यति विनाशमेष्यति सति । केन स्वयमेव कारणान्तरमन्तरेणैव । किं कृत्वा पक्त्वा परिणम्य पतनयोग्यतामासाद्य । केन क्रमेण कालानुपूर्व्या । किंवत्फलवत् वृक्षफलेन तुल्यं । पातोन्मुखकायलिंगं यथा— प्रतिदिवसं विजहद्बलमुज्झद्भुक्तिं त्यजत्प्रतीकारं । वपुरेव नृणां निगदति चरमचरित्रोदयं समयम् ॥

**अर्थ— देह क्रमानें जीर्ण ( वृद्ध ) होऊन जसें एखादें फल पिकून झाडावरून आपोआप पडतें, त्याप्रमाणें पडणार आहे असें वाटल्यास धैर्यशाली श्रावकानें मोठ्या संतोषानें सल्लेखनाविधि करावा.**

कायनिर्ममत्वभावनाविधिमाह—

**'शरीर माझें नव्हें', अशा भावनेचा प्रकार सांगतात.**

जन्ममृत्युजरातङ्काः ।
कायस्यैव न जातु मे ॥
न च कोऽपि भवत्येष ।
ममेत्यङ्गेऽस्तु निर्ममः ॥ १३ ॥

टीका— अस्तु समाधिमरणार्थी भवतु । किंविशिष्टो निर्ममो ममेदमिति सङ्कल्परहितः । क अङ्गे । कथमित्येवं । भवन्ति के जन्ममृत्युजरातङ्काः जन्म च मृत्युश्च जरा च आतङ्कश्च ज्वरादिव्याधिस्ते रोगपुद्गलविवर्तकत्वात्कायस्यैव पुद्गलस्तूपस्य । न जातु कदाचिदपि । मे शुद्धचिद्रूपमात्रस्यात्मनः । न च नापि

भवति । कोऽसावेष कायः । किंविशिष्टः कोऽपि कश्चिदुपकर्ता अपकर्ता वा । कस्य मम शुद्धचिदानन्दमयस्य ॥

**अर्थ—** उत्पत्ति, मरण, जरा व रोगादिकांची पीडा हे सर्व विकार देहास होणारे आहेत; मला होत नाहींत. तसेंच हा देह माझा कोणी नव्हे; ह्याप्रमाणें श्रावकानें देहाविषयीं निर्ममत्वभावना करावी.

आहारहापनसमयमाह—

**भोजनत्याग करण्याचा काल सांगतात.**

पिण्डो जात्याऽपि नाम्नाऽपि ।
समो युक्त्याऽपि योजितः ॥
पिण्डोऽस्ति स्वार्थनाशार्थो ।
यदा तं हापयेत्तदा ॥ १४ ॥

**टीका—** हापयेत्परिचारकादिभिस्त्याजयेत् समाधिमरणोद्यतः । कं तं पिण्डमाहारं । कदा तदा तस्मिन्काले । यदा किं यदा पिण्ड आहारोऽस्ति भवति । किंविशिष्टः स्वार्थनाशार्थः आहारस्य हि स्वार्थो बलोपचयौजोलक्षणं देहकार्यं, देहस्य च धर्मसिद्धिलक्षणमात्मकार्यं स्वार्थस्य नाशो विनाशोऽर्थः प्रयोजनं फलं यस्य स तथोक्तः । किंविशिष्टः समस्तुल्यः । कया जात्या पुद्गलत्वलक्षणया । अपिर्विस्मये आश्चर्ये । यत्सजातीयोऽपि स्वार्थं नाशयति । तथा नाम्ना सञ्ज्ञयाऽपि समः आहारदेहयोरुभयोरपि पिंडशब्दाभिधेयत्वात् । जातिनामभ्यां साम्येऽपि सति विधिव्यतिक्रमे प्रयुक्तः स्वार्थनाशाय स्यादित्यत्राह— युक्त्या शास्त्रोक्तविधिना । योजितोऽपि प्रयुक्तोऽपि । क्व पिण्डे शरीरे ॥

**अर्थ**— पिंड ( आहार ) हा जातीनें ( पुद्गलसमुदायरूपी जातीनें ) व नांवानें ( पिंड ह्या नांवानें ) शरीराशीं सदृश असूनही ( शरीर जसें पुद्गलसमुदायरूप आहे, त्याप्रमाणें अन्न हेंही पुद्गलसमुदायरूप आहे, व शरीरास जसें पिंड हें नांव आहे तसें अन्नासही पिंड हें नांव आहे. ह्मणून शरीर व अन्न हीं दोन्हीं एकमेकांशीं सदृश आहेत ) त्या पिंडाचा ( आहाराचा ) युक्तीनें शरीराचे ठिकाणीं उपयोग केला असतां, ज्यावेळीं त्याच्या शक्तीचा ऱ्हास होऊं लागेल, ( तो आहार शरीरांत शक्ति वाढविण्याचें आपलें काम करण्यास असमर्थ होईल ) त्यावेळीं त्याचा ( आहाराचा ) त्याग करावा.

सल्लेखनाविधिपूर्वकं समाधिमरणोद्योगविधिमाह—

सल्लेखनाविधि करून समाधिमरणाचा उद्योग करण्याविषयीं सांगतात.

उपवासादिभिः कायं ।
कषायं च श्रुतामृतैः ॥
संलिख्य गणमध्ये स्यात् ।
समाधिमरणोद्यमी ॥ १५ ॥

**टीका**— साधकः समाधिमरणोद्यमी गणमध्ये चतुर्विधसङ्घसमक्षे स्यात् । किं कृत्वा संलिख्य सम्यक्कृशीकृत्य । कं कायं । कैरुपवासादिभिरनशनादिबाह्यतपोविशेषैः । कषायं च क्रोधादिकं संलिख्य । कैः श्रुतामृतैः श्रुतज्ञानसुधाभिः ॥

**अर्थ**— उपवासादिकांच्या योगानें शरीर व श्रु

अमृताच्या योगानें कषाय ह्या दोहोंस कृश करून चतुर्विध-संघासमक्ष श्रावकानें समाधिमरणाबद्दल उद्योग करावा.

मृत्युकाले धर्मविराधनाराधनयोः फलविशेषमाह—

आतां; मरणकालीं धर्माचा त्याग करणें व धर्माचें आचरण करणें ह्यांतील न्यूनाधिक फल कशांत आहे हें सांगतात.

आराद्धोऽपि चिरं धर्मो ।
विराद्धो मरणे मुधा ॥
सत्वाराद्धस्तत्क्षणेंऽहः ।
क्षिपत्यपि चिरार्जितम् ॥ १६ ॥

**टीका**—भवति । कोऽसौ धर्मः । किंविशिष्टो मुधा निष्फलः । किंविशिष्टः सन् विराद्धः अतिवर्तितः । क्व मरणे मृत्युसमये । किंविशिष्टोऽपि आराद्धोऽपि आराधितोऽपि । कियच्चिरं दीर्घकालं । स तु धर्मस्तत्क्षणे मरणसमये । आराधितो भावितः । क्षिपति निराकरोति । किं तदंहः पापं । किंविशिष्टं चिरार्जितमपि असंख्यातभवकोट्युपार्जितमपि ॥

**अर्थ**— पुष्कळ कालपर्यंत आचरण केलेला धर्म जर मरणकालीं सोडिला तर तो निष्फल होतो; आणि त्यावेळीं जर त्याची उपासना केली तर एका क्षणांत अनेक जन्मांत संचित केलेलेंही पातक नाहींसें करितो.

चिरकालभावितश्रामण्यस्यापि विराध्य म्रियमाणस्याकीर्तिदुष्परिपाकां स्वार्थक्षतिं दर्शयति—

पुष्कळ कालपर्यंत धार्मिकपणानें वागणाऱ्यानें शेवटीं धर्माचा त्याग करून मेलें असतां दुष्कीर्तीमुळें त्याचा स्वार्थनाश होतो असें सांगतात.

नृपस्येव यतेर्धर्मो ।
चिरमभ्यस्तिनोऽस्त्रवत् ॥
युधीव स्खलितो मृत्यौ ।
स्वार्थभ्रंशोऽयशःकटुः ॥ १७ ॥

टीका—भवति । कोऽसौ स्वार्थभ्रंशः स्वाभिमतार्थनाशः । कस्य यतेः । कस्येव नृपस्येव राज्ञो यथा । किंविशिष्टोऽयशःकटुः अकीर्तिदुःखदः । किं कुर्वतः स्खलतः प्रमाद्यतः । कस्मिन्धर्मे । क्व मृत्यौ मरणक्षणे । कस्यामिव युधीव युद्धसमये यथा । किंविशिष्टस्य चिरं दीर्घकालं धर्मे अस्त्रवत् शस्त्रे यथा । अभ्यस्तिनः कृताभ्यासस्य । अभ्यस्तपूर्वमनेनेति विगृह्य श्राद्धं भुक्तं ठोऽनेनं वेत्यनेन इन्प्रत्ययः ॥

अर्थ—ज्यानें शस्त्रप्रयोगाचा अभ्यास पुष्कळ दिवसपर्यंत केला आहे अशा राजाच्या शस्त्राप्रमाणें संयमी श्रावकाचा धर्म आहे; तेव्हां तें शस्त्र जसें युद्धांत उपयोग करतांना चुकलें असतां राजाच्या मरणास कारण होऊन त्याची अकीर्ति करतें, त्याप्रमाणें संयमीनेंही धर्मत्याग केला असतां त्याचा स्वार्थ नष्ट होऊन अकीर्ति होते.

ननु सुभावितमार्गस्यापि कस्यचित्समाधिमरणं न दृश्यते, कस्यचित्पुनरभावितमार्गस्यापि तदुपलभ्यते, तदनाप्तीयमिति वदन्तं प्रति श्लोकद्वयमाह—

आता; ज्यानें स्वधर्म चांगल्या रीतीनें पाळला त्याला देखील समाधिमरण आलेलें दिसत नाहीं, व ज्यानें धर्माचरण केलें नाहीं त्याला समाधिमरण आलेलें दिसतें; तेव्हां " समाधिमरणाला धर्माचरण हें कारण आहे " असें

ह्मणणें व्यर्थ आहे. असें ह्मणणाऱ्यास पुढील दोन श्लोकांनीं उत्तर सांगतात.

सम्यग्भावितमार्गोऽन्ते ।
स्यादेवाराधको यदि ॥
प्रतिरोधि सुदुर्वारं ।
किञ्चिन्नोदेति दुष्कृतम् ॥ १८ ॥

टीका— स्यादेव अवश्यं भवेत् । कोऽसौ सम्यग्भावितमार्गः सम्यक्सम्पूर्णं चिरं भावितोऽभ्यस्तो मार्गो रत्नत्रयं येन स तथोक्तः । किंविशिष्टः स्यात् अन्ते जन्मप्रान्ते आराधकस्तदा । यदि चेन्नोदेति नोद्भवति । किं तत् दुष्कृतं पुराकृतमशुभं कर्म । किंविशिष्टं प्रतिरोधि समाधिप्रतिसखण्डकं । पुनः किंविशिष्टं सुदुर्वारं यत्नशतेनापि प्रतिषेध्दुमशक्यं । पुनरपि किंविशिष्टं किञ्चिदनिर्दिष्टनामकं । उक्तं च— मृतिकाले नरा हन्त सन्तोऽपि चिरभाविताः । पतन्ति दर्शनादिभ्यः प्राक्कृताशुभगौरवात् ॥ यात्वभावितमार्गस्य कस्याप्याराधना मृतौ । आराधना रत्नत्रयैकाग्रता स्यात् । अयमन्धनिधिलाभो भाक्तिकेऽनिर्वचनाराधनपरे न विष्टम्भ्यो नाभिनिवेष्टव्योऽत्र दुराग्रहो न कर्तव्यो जिनवचनं प्रमाणीकृत्य समाधिमरणाय प्रयतितव्यमित्यर्थः । उक्तं च— पूर्वमभावितयोग्यो यद्यप्याराधयन्मृतौ कश्चित् ॥ स्थाणौ निधानलाभो निदर्शनं नैव सर्वत्र ॥

**अर्थ—ज्याचें निवारण करतां येत नाहीं आणि ह्मणूनच जें समाधीस प्रतिबंध करीत आहे असें कोणतें एखादें अशुभकर्म जर मरणकालीं उत्पन्न झालें नाहीं, तर,**

ज्यानें रत्नत्रयाचा चांगला अभ्यास केला आहे असा श्रावक, अंतकालीं धर्माची उपासना अवश्य करील.

ननु दूरभव्यस्य व्रतं चरतोऽपि न मुक्तिः स्याचदलं तद्दवीयस्त्वे व्रतयत्नेनेत्यारेकायां समाधत्ते—

आतां, " ज्याला मुक्ति प्राप्त होण्याला बराच अवकाश लागावयाचा आहे अशा श्रावकानें चांगल्या रीतीनें व्रताचरण करूनही त्याला मुक्ति मिळत नाहीं ह्मणून मुक्ति मिळण्याचा काल जर दूर असेल तर व्रत करण्याचे आयास व्यर्थ आहेत, तेव्हां ते करण्याचें मुळींच प्रयोजन नाहीं " अशी शंका ज्याला येते, त्याचें समाधान करितात.

कार्यो मुक्तौ दवीयस्या- ।
मपि यत्नः सदा व्रते ॥
वरं स्वः समयाकारो ।
व्रतान्न नरकेऽव्रतात् ॥ १९ ॥

टीका— कार्यः सदा जिनभाक्तिकैः कर्तव्यः । कोऽसौ यत्नस्तात्पर्यं । क्व व्रते । कस्यां सत्यां मुक्तौ निर्वृतौ । किंविशिष्टायां दवीयस्यां दूरतरायां चिरभाविन्यामपि । किं पुनरितरस्यां । अत्रोपपत्तिमाह— वरं भद्रं भवतु । कोऽसौ स्वः स्वर्गे समयाकारः मुक्तेरर्वाक्कालयापना । कस्मात् व्रतात् व्रतानुष्ठानार्जितपुण्यविपाकात् । न वरं कोऽसौ समयाकारः । क्व नरके नरकादिदुर्गतौ । कस्मादव्रतात् हिंसाद्याचरणार्जितपापविपाकात् ॥

अर्थ—आपल्यास मोक्ष प्राप्त होण्याचा काल जरी दूर असला तथापि व्रताचरणाविषयीं सर्वदा यत्न करावा.

कारण, व्रताचरण करून मोक्षप्राप्तीची वाट पहात स्वर्गांत बसणें बरें! परंतु व्रत न करून नरकांत रहाणें बरें नव्हे.

भक्तप्रत्याख्यानयोग्यतामाह--

आतां भोजनाचा त्याग करण्याची योग्यता श्रावकामध्यें केव्हां प्राप्त होते, तें सांगतात.

धर्माय व्याधिदुर्भिक्ष- ।
जरादौ निष्प्रतिक्रिये ॥
त्यक्तुं वपुः स्वपाकेन ।
तच्च्युतौ वाऽशनं त्यजेत् ॥ २० ॥

टीका—त्यजेत् प्रत्याख्यायात् श्रावको यमी वा । किं तदशनं भक्तं भक्तप्रत्याख्यानं कुर्यादित्यर्थः । किं कर्तुं त्यक्तुं मोक्तुं । किं तद्वपुः शरीरं । कस्मै धर्माय आत्मना सह धर्मं भवान्तरं नेतुं । क्व सति व्याधिदुर्भिक्षज्वरोपसर्गादौ धर्मध्वंसहेतावुपस्थिते । किंविशिष्टे निष्प्रतिक्रिये प्रतीकाररहिते । तथा स्वपाकेन स्वयं कालक्रमेण परिणम्यायुःक्षये । तच्च्युतौ तस्य वपुषश्च्यवने । वा शब्दात्घोरोपसर्गादिना च्याव्यमाने च सत्यशनं त्यजेत् । एतन शरीरत्यजनच्यवनच्यावनविषयं त्रिविधं भक्तप्रत्याख्यानं मरणमन्वाख्यातं बोद्धव्यम् ॥

अर्थ— दुर्निवार असा व्याधि उत्पन्न झाला असतां, देशांत दुष्काळ पडला असतां व अतिशय वृद्धपणा आला असतां, त्या प्रसंगीं, किंवा कालक्रमानें आपला देह पडण्याचा प्रसंग प्राप्त झाला असतां, धर्माच्या रक्षणाकरितां भोजन सोडावें.

समाधिमरणार्थं शरीरोपस्कारविधिमाह—

**समाधिमरण प्राप्त होण्याकरितां जो शरीरसंस्कार करावयाचा त्याचा प्रकार सांगतात.**

**अन्नैः पुष्टो मलैर्दुष्टो ।**
**देहो नान्ते समाधये ॥**
**तत्कर्श्यो विधिना साधोः ।**
**शोध्यश्चायं तदीप्सया ॥ २१ ॥**

**टीका**—न भवति । कोऽसौ देहः । कस्मै समाधये समाध्यर्थं । क्व अन्ते मरणसमये । किंविशिष्टो अन्नैराहारैः पुष्ट उपचितो । मलैश्च वातपित्तकफैर्दुष्टोऽधिकृतः । यत एवं तत्तस्मात् । कर्श्यः कृशीकर्त्तव्योऽयं देहः । कस्य साधोः सिद्धिसाधकेनेत्यर्थः । केन विधिना सल्लेखनाविधानेन । शोध्यश्च योग्यविरेचनबस्तिकर्मादिना निष्काशितजठरमलः कर्त्तव्यः । कया तदीप्सया समाधिवाञ्छया ॥

**अर्थ— अन्नांनीं पुष्ट झालेला व वायु, पित्त आणि कफ ह्या त्रिदोषांनीं बिघडलेला असा देह अंतकाळीं समाधीच्या उपयोगीं पडत नाहीं; ह्मणून, सद्बुद्धि अशा श्रावकानें तो देह सल्लेखनाविधीनें कृश करावा. व समाधिमरण प्राप्त व्हावें ह्या इच्छेनेंच जुलाबाचें औषध घेऊन, अगर बस्तिकर्म (पिचकारी मारणें-इनिमा) करून कोठा स्वच्छ करावा.**

कषायकर्शनं विना कायकर्शनस्य नैष्फल्यं समर्थयते ॥

**कामादि कषाय कमी केल्यावांचून देह कृश करणें व्यर्थ आहे असें उपपादन करितात.**

सल्लेखनाऽसंलिखतः ।
कषायान्निष्फला तनोः ॥
कायोऽजडैर्दण्डयितुं ।
कषायानेव दण्ड्यते ॥ २२ ॥

टीका —भवति । काऽसौ सल्लेखना कृशीकरणं । कस्यास्तनोः शरीरस्य । किंविशिष्टा निष्फला । किं कुर्वतः असंलिखतः कृशानकुर्वतः साधोः । कान् कषायान् क्रोधादीन् । यतो दंड्यते परिक्लश्यते । कोऽसौ कायः कैरजडैः बुद्धैः । किं कर्तुं दण्डयितुं निगृहीतुं । कान् कषायानेव न रसरक्तादिधातून् ॥

अर्थ— कामक्रोधादि कषाय कमी न करणाऱ्या श्रावकानें आपल्या शरीरास कृश करणें अगदी व्यर्थ होय! कारण, ज्ञाते लोक कषाय कमी करण्याकरितांच देह कृश करतात.

आहारदृप्तमनसां कषायदुर्जयत्वं प्रकाश्य भेदज्ञानबलाज्जेतॄणां जयवादमाह—

आतां; नेहमीं भोजन करण्यानें ज्यांचीं अंतःकरणें अनिवार झालीं आहेत, अशा लोकांस कषाय जिंकिता यावयाचे नाहींत; असें स्पष्ट दाखवून, आत्मा व शरीर ह्यांतील भेद ज्यांना समजला आहे त्यांचा उत्कर्ष दाखवितात.

अन्धोमदान्धैः प्रायेण ।
कषायाः सन्ति दुर्जयाः ॥

टीका—अतिनिर्भयमुपाकरोत् स्वस्वामिनृपतिकार्यमाणोपसर्गनिराकरणपूर्वकसत्कारकरणेनोपाकृतवान् । कोऽसौ दृढशूर्पो नाम चोरः । कं तं धनदत्तश्रेष्ठिनं । किं कृत्वा अभ्येत्य आगत्य । कस्मात्सौधर्मात् सौधर्मकल्पविमानात् । सौधर्मे महर्द्धिकदेवत्वं प्राप्त इत्यर्थादापन्नमत्र बोध्यं । कथम्भूतः सन् मृतः । किं कुर्वन् स्मरन् चिन्तयन् कं महामन्त्रं पञ्चनमस्कारं तदनुचिन्तनस्योत्कृष्टस्वाध्यायत्वात् । किंविशिष्टं धनदत्तार्पितं धनदत्ताख्येन श्रेष्ठिना ढौकितं । किंविशिष्टः स्थितः शूले प्रोतः शूलिकायामारोपितः ॥

अर्थ— शूलावर चढविलेला व धनदत्त श्रेष्ठीनें दिलेल्या पंचनमस्कारात्मक महामंत्राचें स्मरण करणारा असा दृढशूर्प नांवाचा चोर मृत झाल्यावर देवत्वाला प्राप्त झालेला असा झोत्साता सौधर्मविमानांतून येऊन त्या धनदत्त श्रेष्ठीवर अनंत उपकार करिता झाला.

खण्डश्लोकैस्त्रिभिः कुर्वन् ।
स्वाध्यायादि स्वयंकृतैः ॥
मुनिनिन्दासमौग्ध्योऽपि ।
यमः सप्तर्द्धिभूरभूत् ॥ ८० ॥

टीका— अभूत् । कोऽसौ यमः यमो नाम राजा, राज्यं त्यक्त्वा प्रव्रजितः । किंविशिष्टः सप्तर्द्धिभूः । बुद्धि तवो वि य रिद्धी विउणरिद्धी तहेव ओसहिया । रसबलअक्खीणा वि य रिद्धीओ सत्तपण्णत्ता ॥ इत्यासां सप्तानामृद्धीनां भूः स्थानं सप्तर्धिप्राप्तोऽभूदित्यर्थः । किंविशिष्टोऽपि मुनिनिन्दासमौग्ध्योऽपि मुनिनिन्दया प्राप्तमूढभावोऽपि । किं कुर्वन् स तथा

अभूत् । कुर्वन् किं तत् स्वाध्यायादि । कैः खण्डश्लोकैः । किंविशिष्टैः स्वयंकृतैः स्वयमात्मना निर्मितैः । कतिभिस्त्रिभिः तद्यथा—
कंडसि पुणुणं खेवसि रेगं दहा । जवं पत्थेसि खादिदुं ॥ १ ॥
अंणत्थ किं फलो वहा तुह्मी इत्थ बुभिया छिंदे । अंके च्छेद इक्को णिया ॥ २ ॥ अह्मा दोणं दि भयं दिहादोदिसराभयं तुह्म ॥ ३ ॥

**अर्थ—** मुनींची निंदा करण्यानें ज्याला मूढता प्राप्त झाली आहे असा यम नांवाचा राजा, स्वतः केलेल्या आध्र्यामुध्र्या तीन श्लोकांनीं स्वाध्यायादि क्रिया करणारा असल्यामुळें सात प्रकारच्या समृद्धींचें स्थान होता झाला.

अहिंसासत्ययोर्माहात्म्यं द्वाभ्यामाह—

**अहिंसाप्रत्यपि दृढं ।**
**भजन्नोजायते रुजि ॥**
**यस्त्वध्यहिंसासर्वस्वे ।**
**स सर्वाः क्षिपते रुजः ॥८१॥**

**टीका—** ओजायते ओजस्वीवाचरति दुःखेन नाभिभूयत इत्यर्थः । कोऽसौ पुरुषः । कस्यां रुजि उपसर्गादिपीडायामुपस्थितायां । किं कुर्वन् दृढं भजन् गाढं सेवमानः । किं तत् अहिंसाप्रत्यपि अहिंसायाः स्तोकमहिंसाप्रति । स्तोके प्रतिनेत्यनेनाव्ययीभावः ॥ स्तोकामप्यहिंसामित्यर्थः । यस्तु भवति । कथमधि अधीश्वरः । क्व अहिंसासर्वस्वे अहिंसायाः सर्वस्वं साकल्यमहिंसासर्वस्वं तस्मिन् । ईश्वरेऽधीत्यनेन सप्तमी । सकलाहिंसाया अधीश्वरो भवतीत्यर्थः । सः क्षिपते निराकरोति । काः सर्वाः समस्ताः रुजो दुःखानि ॥

अर्थ— स्वल्प अशा अहिंसेला निश्चयानें सेवन करणारा मनुष्य दुःखाच्या प्रसंगीं गंभीरपणास पावतो ( दुःख सहज सहन करतो ) आणि ज्यानें सर्व अहिंसा निश्चयानें धारण केली असेल तो सर्वदुःखांस दूर फेंकितो.

यमपालो ऱ्हदेऽहिंस- ।
न्नेकाहं पूजितोऽप्सुरैः ॥
धर्मस्तत्रैव मेण्ढ्रघ्नः ।
शिशुमारैस्तु भक्षितः ॥ ८२ ॥

टीका— पूजितः कोऽसौ यमपालः वाराणस्यां मातङ्गः। कैः अप्सुरैः जलदेवताभिः । क्व ऱ्हदे शिशुमारऱ्हदे । किं कुर्वन् एकाहमेकादिनमहिंसन् चतुर्दशीदिने हिंसामकुर्वन्नित्यर्थः । धर्मस्तु श्रेष्ठिपुत्रो भक्षितः । कैः शिशुमारैः । क्व तत्रैव तस्मिन्नेव ऱ्हदे । किंविशिष्टः सन्? मेण्ढ्रघ्नः कृतराजमेण्ढ्रकवधः ॥

अर्थ— शिशुमार नांवाच्या डोहांत एक दिवस हिंसा न केल्यानें यमपाल नांवाच्या मांगाचा जलदेवतांनीं फार सत्कार केला, आणि त्याच ठिकाणीं बोकड मारणाऱ्या धर्म नांवाच्या श्रेष्ठिपुत्रास शिरस नांवाच्या पाण्यांतील जंतूंनीं खाऊन टाकिलें.

असत्यकृतापायं द्वाभ्यामाह—

आतां; पुढील दोन श्लोकांनीं असत्यापासून होणारा अपाय सांगतात.

मा गां कामदुघां मिथ्या- ।
वादव्याघ्रोन्मुखीं कृथाः ॥

अल्पोऽपि हि मृषावादः
श्वभ्रदुःखाय कल्पते ॥ ८३ ॥

**टीका**—हे क्षपक मा कृथाः मा कुरु त्वं । कां गां वाचं । पक्षे अनड्वाहीं । किंविशिष्टां कामदुघां कामं प्रार्थ्यमानमर्थं दोग्धि क्षरत्याविर्भावयतीत्येवम्भूतां सत्यवाचं कामधेनुं चेत्यर्थः । किंविशिष्टां मा कृथाः मिथ्यावादव्याघ्रोन्मुखीं मिथ्यावादोऽसत्यजल्पः स एव व्याघ्रः कामधेनोरिव सत्यवाचः संहरणशीलत्वात् मिथ्यावादव्याघ्रस्य उन्मुखीं संमुखीं मिथ्यावादं कर्तुमुद्युक्तां व्याघ्रं च प्रतिवर्तमानां । हि यस्मादल्पोऽपि स्तोकोऽपि किं पुनर्भूयान् । मृषावादो वितथव्याहारः श्वभ्रदुःखाय कल्पते सम्पद्यते, नरकदुःखं सम्पादयतीत्यर्थः ॥

**अर्थ**— आपले सर्व मनोरथ पूर्ण करणाऱ्या अशा वाणीरूपी कामधेनूस असत्यभाषणोच्चाररूपी व्याघ्राच्या समोर नेऊं नकोस ह्मणजे तिला असत्यभाषण करण्यास तयार करूं नकोस! कारण, स्वल्प असेंही मिथ्याभाषण नरकाचें दुःख संपादन करितें.

अजैर्यष्टव्यमित्यत्र ।
धान्यैस्त्रैवार्षिकैरिति ॥
व्याख्यां छागैरिति परा- ।
वर्त्यागान्नरकं वसुः ॥ ८४ ॥

**टीका**—अगात् गतः कोऽसौ वसुर्नाम राजा । किं तन्नरकं । किं कृत्वा परावर्त्य अन्यथा कृत्वा । कां धान्यैस्त्रिवार्षिकैरिति व्याख्यां । कथं परावर्त्य च्छागैरिति । क अजैर्यष्टव्यमित्यत्र परमागमे

वाक्ये । अयमर्थः न जायंत इत्यजा वर्षत्रयवृत्तयो व्रीहयस्तैर्यष्टव्यं शान्तिकपौष्टिकार्था क्रिया कार्येति क्षीरकदंबाचार्यैरिदं व्याख्यानं परावर्त्य अजैरजात्मजैर्यष्टव्यं हव्यकव्यार्थो विधिर्विधातव्य इत्यन्यथा कृत्वा पर्वतनारदविसंवादे वसुराजः श्वभ्रमगमदित्यर्थः ॥ अजैर्होतव्यमिति क्वचित्पाठः ॥

अर्थ— “अजैर्यष्टव्यं ( अजांच्या योगानें यज्ञ करावा )” ह्या वाक्यांतील ‘अज’ शब्दाचा ‘तीन वर्षांचें जुनें धान्य’ हा अर्थ फिरवून ‘अज’ ह्मणजे ‘मेंढा’ असा अर्थ करणारा वसु नांवाचा राजा मरणानंतर नरकगतीस पावला.

स्तेयानुभावं द्वाभ्यामाह—

आतां; चोरीचें फळ पुढील दोन श्लोकांनीं सांगतात.

आस्तां स्तेयमभिध्याऽपि ।
विध्याप्याऽग्निरिव त्वया ॥
हरन् परस्वं तदसून् ।
जिहीर्षन् स्वं हिनस्ति हि ॥ ८५ ॥

टीका—भोः सनाधिमरणार्थिन् । आस्तां तिष्ठतु किं तत्कथनेनेत्यर्थः । किं तत् स्तेयं परधनापहरणं । विध्याप्या रामयितव्या तया । काऽसावभिध्याऽपि परधनेच्छाऽपि । क इवाग्निरिव बन्हिर्यथा तापहेतुत्वात् । हि यस्मात् हिनस्ति हन्ति । कोऽसौ पुरुषः । कं स्वमात्मानं । किं चिकीर्षन् जिहीर्षन् हर्तुमिच्छन् । कान् तदसून् परप्राणान् । किं कुर्वन् हरन् अदत्तं गृण्हन् किं तत् परस्वं परद्रव्यं । अयमत्राभिप्रायः परधनं मुष्णतः परप्राणोपघातेच्छा अवश्यं भाविनी, परजिघांसा च आत्मनो हिंसा

परमार्थतस्तस्या एव हिंसात्वात् । भावहिंसायामेव हि सत्यां द्रव्य-हिंसा दुरन्तसंसारदुःखलक्षणं स्वफलं प्रयच्छतीति ॥

अर्थ— हे समाधिमरणाची इच्छा करणाऱ्या क्षपका! चोरी तर राहूं देच! पण तिची नुसती इच्छा जरी झाली, तरी तीदेखील अग्नीप्रमाणें त्रास देणारी असल्यानें, ती तूं समूळ नाहींशी करून टाक! कारण, परद्रव्याचें हरण करणारा मनुष्य, तें परद्रव्य आपल्याला मिळावें ह्मणून दुसऱ्याचे प्राण देखील घेण्याची इच्छा करितो. आणि त्यामुळें तो आत्मघात करणारा होतो. ह्याचें तात्पर्य असें कीं, दुसऱ्याचें द्रव्य चोरावयाच्या वेळीं तें मिळ-ण्याकरितां त्याचा प्राण घेण्याची इच्छा होते. ही जी दुसऱ्याचा प्राण घेण्याची इच्छा तिलाच भावहिंसा असें ह्मणतात. केवळ द्रव्यहिंसा जरी झाली, तथापि त्यापासून मोठेंसें पाप होत नाहीं. जसें सहज धक्का लागून एखादा प्राणी मरणें; हें देखील वस्तुतः जरी वाईटच आहे तथापि ह्या जन्ममरणरूपी संसाराच्या चक्रांत अवश्य पडलें पाहिजे असल्या तऱ्हेचें पाप नाहीं. कारण, त्या हिंसेविषयीं इच्छा नसून ती सहज झालेली असते. परंतु भावहिंसा नुसती सुद्धां असणें बरें नाहीं. कारण, भावहिंसा उत्पन्न झाल्यावर द्रव्यहिंसा जरी घडली नाहीं तथापि तिच्या योगानें ह्या दुःखयुक्त असलेल्या संसारांत प्राण्याला अवश्य फिरावें लागतें.

रात्रौ मुषित्वा कौशाम्बीं ।
दिवा पञ्चतपश्चरन् ॥

शिक्यस्थस्तापसोऽधोऽगात् ।
तलारकृतदुर्मृतिः ॥ ८६ ॥

टीका—अधोऽगान्नरकं गतः । कोऽसौ तापसो भौतिकः । किंविशिष्टः सन् तलारकृतदुर्मृतिः तलवरेण प्रवर्तितप्रकृष्टरौद्रध्यानाविष्टमरणः । किं कुर्वन् शिक्यस्थः परभूमिं न स्पृशामीति लम्बमाने शिक्ये स्थितः । पञ्चतपश्चरन् पञ्चाग्निसाधनं कुर्वन् । क्व दिवा दिने । किं कृत्वा मुषित्वा मुषितधनां कृत्वा । कां कौशाम्बीं कौशाम्बीसञ्ज्ञनगरीं तन्नगरीवास्तव्यलोकं । क्व रात्रौ ॥

अर्थ—रात्रीं कौशांबीनगरींतील लोकांना लुटून दिवसा पंचाग्निसाधन करणारा शिक्यांत बसलेला एक तपस्वी, तलारानें हाल हाल करून मारल्यामुळें रौद्रध्यानाच्या योगानें आपल्या दुष्कृत्यानेंच नरकांत पडला.

ब्रह्मचर्यदार्ढ्यविधापनार्थमाह—

ब्रह्मचर्य दृढ होण्याकरितां सांगतात.

पूर्वेऽपि बहवो यत्र ।
स्खलित्वा नोद्धताः पुनः ॥
तत्परं ब्रह्म चरितुं ।
ब्रह्मचर्यं परं चरेत् ॥ ८७ ॥

टीका—बहवः प्रभूताः पूर्वे रुद्रादयः किं पुनरद्यतना मुनय इत्यपिशब्दार्थः । यत्र यस्मिन् ब्रह्मचर्याख्ये व्रते, स्खलित्वा अतिचारं प्राप्य, न पुनरुद्धता न तत्रात्मानमुपस्थापितवन्तोऽनाचारं चरितवन्त इत्यर्थः । तद्ब्रह्मचर्यं चतुर्थव्रतं परमुत्कृष्टं मनागप्यतीचाररहितं कृत्वा चर धारय त्वं । किं कर्तुं चरितुमनुभवितुं ।

किं तत्परमुत्कृष्टं निर्विकल्पं प्रत्यग्ज्योतिराख्यं, ब्रह्म ज्ञानं, शुद्धस्वात्मानं स्वात्मना संवेदयितुमित्यर्थः ॥

अर्थ—पूर्वीचे मोठमोठे मुनीही ज्या ब्रह्मचर्यापासून भ्रष्ट होऊन पुनः ते पाळण्यास समर्थ झाले नाहींत तें सर्वव्रतांत श्रेष्ठ असें ब्रह्मचर्यव्रत केवलज्ञानाची प्राप्ती होण्याकरितां श्रावकानें अवश्य पाळावें.

नैर्ग्रंथ्यव्रतं दृढयितुमाह—

निर्ग्रंथव्रताची दृढता होण्याकरितां सांगतात.

मिथ्येष्टस्य स्मरन् श्मश्रु- ।
नवनीतस्य दुर्मृतेः ॥
मोपेक्षिष्ठाः क्वचिद्ग्रन्थे ।
मनो मूर्च्छन्मनागपि ॥ ८८ ॥

टीका—भोः सुविहितसाधो मा उपेक्षिष्ठाः माऽवधीरय त्वं । किं तन्मनः । किं कुर्वत् मूर्च्छत् मुह्यत् ममेदमिति संकल्पं गच्छत् । क कस्यचिच्छ्रेष्ठिपुत्रस्य । किंविशिष्टस्य मिथ्येष्टस्य वितथमनोरथस्य । पुनः किंविशिष्टस्य दुर्मृतेः रौद्रध्यानमृतस्य ॥

अर्थ— मिथ्यावस्तूवर प्रेम करणाऱ्या श्मश्रुनवनीत नांवाच्या मनुष्याच्या भयंकर मरणाचें स्मरण करून, कोणत्याही परिग्रहाविषयीं मनाला स्वल्प अभिलाष जरी उत्पन्न झाला, तथापि त्याची उपेक्षा करूं नये.

निश्चयनयेन नैर्ग्रन्थ्यप्रतिपत्त्यर्थमाह—

बाह्यो ग्रन्थोऽङ्गमक्षाणा- ।
मान्तरो विषयैषिता ॥

निर्मोहस्तत्र निर्ग्रन्थः ।
पान्थः शिवपुरेऽर्थतः ॥ ८९ ॥

टीका—भवति । कोऽसौ बाह्यो बहिरङ्गो, ग्रन्थः परिग्रहः । किमङ्गं शरीरं । तथा आंतरोऽन्तरङ्गः सङ्गो भवति । किं अक्षाणां स्पर्शनादीनां विषयैषिता स्पर्शादिविषयेष्वभिलाषः । तत्र द्वयोरपि ग्रन्थयोर्निर्मोहो निर्मूर्च्छः साधुरर्थतः परमार्थेन निर्ग्रन्थो निष्परिग्रहो भवति । तथा शिवपुरे निर्वाणनगरे पान्थो नित्यं प्रस्थायी स्यात् निर्ग्रन्थस्यैव मोक्षमार्गेऽविच्छिन्नं प्रस्थातुं समर्थत्वात् ॥

अर्थ— शरीर हें बाह्यपरिग्रह होय, आणि इंद्रियांनां होणारी जी विषयांची इच्छा तो अंतरंगपरिग्रह होय; ह्या दोन्ही परिग्रहांविषयीं जो निर्मोह असतो तो निर्ग्रंथ, आणि तोच खरोखर मुक्तिपुरीचा वाटसरू होय!

कषायेन्द्रियकृतापायाननुस्मारयन्नाह—

क्रोधादि कषाय आणि इंद्रियें ह्यांच्यापासून होणाऱ्या दुःखांचें स्मरण करून देतात.

कषायेन्द्रियतन्त्राणां ।
तत्तादृग्दुःखभागिताम् ॥
परामृशन्मास्म भवः ।
शंसितव्रत तद्वशः ॥ ९० ॥

टीका—भोः शंसितव्रत शंसितानि महद्भिरपि स्तुतानि व्रतानि यस्य स शंसितव्रत, मा स्म भवः मा भूस्त्वं । किं विशिष्टस्तद्वशः कषायेन्द्रियपरतन्त्रः । किं कुर्वन् परामृशन् चिन्तयन् । कां

तत्ताहग्दुःखभागितां सा षष्ठाध्याये निर्दिष्टा ताहगनन्यसाधारणी दुःखभागिता क्लेशानुभूतिस्तां। केषां कषायेन्द्रियेषु आयत्तानां तदभिभूतानामित्यर्थः ॥

अर्थ— महात्म्यांनीं देखील ज्याच्या व्रताची स्तुति केली आहे अशा हे श्रावका! क्रोधादि कषाय आणि इंद्रियें ह्यांच्या ताब्यांत असलेल्या लोकांचें अवर्णनीय दुःख भोगणें पाहून तूं त्यांच्या ताब्यांत जाऊं नकोस.

एवं व्यवहाराराधनानिष्ठतां विधाप्य निश्चयाराधनामुपदिशति—

ह्याप्रमाणें व्यवहाराराधना सांगून आतां निश्चयाराधनेचा उपदेश करितात.

श्रुतस्कन्धस्य वाक्यं वा ।
पदं वाऽक्षरमेव वा ॥
यत्किञ्चिद्रोचते तत्रा- ।
लम्ब्य चित्तलयं नय ॥ ९१ ॥

टीका—अहो व्यवहाराराधनापरिणत आराधकराज। यत्किंचिद्यत्किमपि रोचते तुभ्यं रुचिमुत्पादयति च । किं तद्वाक्यं वा बाह्यमाध्यात्मिकं वा, णमो अरहंताणमित्यादिकं पदं वा, अर्हमित्यादिकमक्षरमेव वा अ सि आ उ सा इत्यादीनामेकतमं । कस्य सम्बन्धि श्रुतस्कन्धस्य श्रुतस्याङ्गप्रविष्टस्य आचाराङ्गादिद्वादशविकल्पस्य अङ्गबाह्यस्य च सामायिकादिभेदस्य प्रकीर्णकाख्यस्य स्कन्धः सङ्घातस्तस्य मध्ये यत्किंचिद्वाक्यादिकमिदानीं क्षीणशक्तेस्तवानुरागं जनयति। तत्र इष्टे वाक्यादीनामन्यतमे आलम्ब्य आसज्य चिरत्र भवतः प्रमाणं श्रुतस्कन्धवाक्यादीनां

त्रयाणामपि भक्त्या भाव्यमानानां परमार्थाराधनासाधनसामर्थ्यनिर्णयात्। अक्षरमेवेत्यत्र एव शब्दश्च स्वयोग्यव्यवस्थापकः ॥

अर्थ—(त्याला उपदेश करितात.) बा आराधका! द्वादशांग जिनशास्त्रापैकीं कोणतेंही एक वाक्य अथवा "ॐ णमो अरहंताणं" इत्यादि पस्तीस अक्षरांचें पद ह्मणजे णमोकार महामंत्र किंवा सोळा, सहा, पांच, चार, दोन एक ह्यांपैकीं कितीही अक्षरांचें एक पद ह्मणजे मंत्र अथवा 'ॐ' हा एकाक्षरी मंत्र, ह्यांपैकीं जें तुला प्रिय वाटेल त्या ठिकाणीं तूं आपलें अंतःकरण एकाग्र कर.

शुद्धं श्रुतेन स्वात्मानं।
गृहीत्वाऽर्य स्वसंविदा॥
भावयँस्तल्लयापास्त-।
चिन्तो मृत्वैहि निर्वृतिम्॥ ९२॥

टीका—हे आर्य आराधनातत्पर। एहि गच्छ त्वं। कां निर्वृतिं मुक्तिं। किं कृत्वा मृत्वा प्राणान् विसृज्य। कथम्भूतो भूत्वा तल्लयापास्तचिन्तः तत्र शुद्धस्वात्मनि लयः श्लेषस्तल्लयस्तन्मयीभावस्तेन अपास्ता निराकृता चिन्ता संकल्पाश्रित्तं वा मनो यस्य स तथोक्तः। किं कुर्वन् भावयन् कं शुद्धं रागद्वेषमोहरहितं स्वात्मानं निजचिद्रूपं। कया स्वसंविदा स्वसंवेदनेन। किं कृत्वा गृहीत्वा निश्चित्य। केन श्रुतेन 'एगो मे संसदो आदा' इत्यादिश्रुतज्ञानेन। मृत्वेहीत्यत्र ओमाङोरित्यनेन परस्वरूपं। उक्तं च

क्षेत्रपात्रे द्वे ज्ञातव्ये। आराधनोपयुक्तः सन् सम्यक्कालं विधाय च।
उत्कर्षात्त्रिभवान् गत्वा प्रयाति परिनिर्वृतिम्॥ १॥

अर्थ— हे उपासका! स्वसंवेदनानें आपल्या चित्स्वरूप असलेल्या आत्म्याचा निश्चय करून श्रुतज्ञानानें तो राग-द्वेषादिकांनीं रहित आहे, अशी भावना करणारा व त्या आत्म्याचे ठिकाणीं जें तादात्म्य त्याच्या योगानें ज्याच्या सर्व वृत्ति नष्ट झाल्या आहेत असा होत्साता, ह्या देहाचा संबंध टाकून (मरून) मुक्तीला प्राप्त हो!

उक्तमेवार्थं परमार्थसंन्यासोपदेशद्वारेण समर्थयते—

वरील श्लोकांत सांगितलेला विषय वास्तव संन्यासाच्या उपदेशाच्या द्वारानें पुनः सांगतात.

संन्यासो निश्चयेनोक्तः ।
स हि निश्चयवादिभिः ॥
यः स्वस्वभावे विन्यासो ।
निर्विकल्पस्य योगिनः ॥ ९२ ॥

टीका—हि यस्मान्निश्चयवादिभिर्व्यवहारनयसापेक्षनिश्चयनयप्रगोगचतुरैः सूरिभिर्निश्चयेन परमार्थेन स संन्यास उक्तः मुमुक्षूणामग्रे प्ररूपितः । यः किं यो विन्यासः विधिपूर्वकमात्मनः स्थापनां क्व स्वस्वभावे शुद्धचिदानन्दमये स्वात्मनि । कस्य योगिनः समाधिमतः । किंविशिष्टस्य निर्विकल्पस्य अन्तर्जल्पसंपृक्तोत्प्रेक्षाजालनिष्क्रान्तस्य ॥

अर्थ—ज्याच्या अंतःकरणवृत्ति निरुद्ध झाल्या आहेत अशा व समाधीनें युक्त असलेल्या जीवाची जी शुद्धचिदानंदमय अशा स्वरूपाचे ठिकाणीं स्थापना (एकीभाव) तेच खरा संन्यास असें निश्चयनयानें बोलणाऱ्या पंडितांनीं सांगितलें आहे.

परीषहादिना विक्षिप्यमाणचित्तस्य क्षपकस्य निर्यापकाचार्यः किं कुर्यादित्याह—

परीषहादिकांच्या योगानें ज्याचें अंतःकरण व्यग्र झालें आहे अशा क्षपकास निर्यापकाचार्यानें काय करावें तें सांगतात.

परीषहोऽथवा कश्चि- ।
दुपसर्गो यदा मनः ॥
क्षपकस्य क्षिपेज्ज्ञान- ।
सारैः प्रत्याहरेत्तदा ॥ ९४ ॥

टीका— यदा यस्मिन्काले क्षिपेद्यत्र तत्र भ्रमयेत् । कोऽसौ कश्चित् कोऽपि क्षुधादीनामन्यतमः परिषहोऽथवा कश्चिदचेतनकृतादीनामन्यतम उपसर्गो वा । किं तन्मनः । कस्य आराधकस्य । तदा प्रत्याहरेत् व्यावर्तयेत् शुद्धस्वात्मोन्मुखं तत्कुर्यादाचार्यः । कैः ज्ञानसारैः श्रुतज्ञानरहस्योपदेशैः ॥

अर्थ— ज्यावेळीं एखादा उपसर्ग किंवा एखादा परीषह क्षपकाच्या अंतःकरणास व्यग्र करील, त्यावेळीं, निर्यापकाचार्यानें श्रुतज्ञानांतील रहस्यांच्या उपदेशानें तें परतवावें.

ज्ञानसारैरित्येतत् प्रपंचयितुमुत्तरप्रबन्धमाह—

श्रुतज्ञानाच्या रहस्यांचा उपदेश पुढील श्लोकांनीं विस्तारानें सांगतात.

दुःखाग्निकीलैराभीलै- ।
र्नरकादिगतिष्वहो ॥

तप्तस्त्वमङ्गसंयोगात् ।
ज्ञानामृतसरोऽविशन् ॥ ९५ ॥

**टीका**—अहो भावकप्रवेक तप्तः सन्तप्तस्त्वं । कैर्दुःखाग्निकीलैः शारीरमानसाशान्तदहनज्वालाभिः । किंविशिष्टैः आभीलैः कष्टैः प्रतिकर्तुमशक्यैरित्यर्थः । कासु नरकादिगतिषु नारकतिर्यङ्मनुष्यदेवभवग्रहणेषु । कस्मादंगसंयोगात् शरीरसंश्लेषात्, शरीरमात्मबुध्याध्यवस्यान्नित्यर्थः । किं कुर्वन् अविशन् अप्रविशन् अनवगाहमानः । किं तत् ज्ञानामृतसरः अन्यच्छरीरमन्योऽहमित्यादिभेदोपलम्भपीयूषतडागम् ॥

**अर्थ**— हे भावका! शरीराच्या संबंधामुळें नरकादि गतींच्या ठिकाणीं भयंकर अशा दुःखाग्नीच्या ज्वालांनीं तूं फार तापलेला आहेस! कारण, तूं ज्ञानरूपी अमृताच्या सरोवरांत प्रवेश केला नव्हतास!

इदानीमुपलब्धात्म- ।
देहभेदाय साधुभिः ॥
सदाऽनुगृह्यमाणाय ।
दुःखं ते प्रभवेत्कथम् ॥ ९६ ॥

**टीका**—इदानीं सम्प्रति । कथं प्रभवेत् । किं तत् दुःखं । कस्मै ते तुभ्यं । केनाऽपि प्रकारेण त्वामभिभवितुं परिषहादिदुःखं न शक्नुयादित्यर्थः । किंविशिष्टाय ते उपलब्धात्मदेहभेदाय निश्चितस्वात्मशरीरव्यतिरेकाय । पुनः किंविशिष्टाय अनुगृह्यमाणाय उपक्रियमाणाय । कैः साधुभिः संयतैः । कथं सदा नित्यम् ॥

**अर्थ**—देह व आत्मा ह्यांतील भेद ज्याला बरोबर

दिसला आहे व सत्पुरुष सर्वदा ज्यावर कृपा करीत आहेत अशा तुला, ह्या समयीं त्रास देण्यास दुःख कसें बरें समर्थ होईल?

दुःखं सङ्कल्पयन्ते ते ।
समारोप्य वपुर्जडाः ॥
स्वतो वपुः पृथक्कृत्य ।
भेदज्ञाः सुखमासते ॥ ९७ ॥

टीका—संकल्पयन्ति ममेदमिति व्यवस्यन्ति । के ते जडाः बहिरात्मानः । किं तत् दुःखं अहं दुःखवानस्मीति प्रतिपद्यन्त इत्यर्थः । किं कृत्वा समारोप्य सन्मुखं योजयित्वा । किं तद्वपुः शरीरं । क्व स्वे आत्मनि स्वदेहं स्वात्मतया निश्चित्येत्यर्थः । भेदज्ञा आत्मशरीरविवेकविदः । पुनरासते तिष्ठंति । कथं सुखं स्वात्मदर्शनोत्थमानन्दमनुभवन्तीत्यर्थः । किं कृत्वा पृथक्कृत्य भेदेनाध्यवसाय्य । किं तद्वपुः । कस्मात्स्वतः शरीरमात्मनो भिन्नं निश्चित्य । तद्भेदभावना यथा— न मे मृत्युः कुतो भीतिर्न मे व्याधिः कुतो व्यथा । नाहं बालो न वृद्धोऽहं न युवैतानि पुद्गले ॥ जीवोऽन्यः पुद्गश्चान्य इत्यादि ॥

अर्थ— मूर्ख लोक आत्म्याच्या ठिकाणीं देहाचा आरोप करून (देह हाच आत्मा अशी भावना करून) दुःखाची कल्पना करितात. ह्मणजे मी दुःखी आहे असें मानितात. परंतु ज्यांना देह आणि आत्मा ह्यांतील भेद समजला आहे असे संयमी मुनि आपल्यापासून देह निराळा करून सुखानें रहातात.

परायत्तेन दुःखानि ।
बाढं सोढानि संसृतौ ॥
त्वयाऽद्य स्ववशः किञ्चित्- ।
सहेच्छन्निर्जरां पराम् ॥ ९८ ॥

टीका—त्वया समाधिसाधनोद्यतेन भवता बाढमत्यर्थं सोढानि अनुभूतानि । कानि दुःखानि क्व संसृतौ अनादिसंसारे । किंविशिष्टेन सता परायत्तेन परवशेन । अद्य सम्प्रति प्रत्यासन्नमृत्युसमये सह साम्यभावनयाऽनुभव । कानि दुःखानि कथं किंचित् स्तोकं अल्पकालं । किंविशिष्टः सन् स्ववशः स्वाधीनः । कुर्वन्निच्छन् वांछन् निर्जरामशुभकर्मक्षयं । किंविशिष्टां यपरां उत्कृष्टामन्त्या वा अलब्धपूर्वां संवरसहभाविनीम् ॥

अर्थ—उपासका! कर्माच्या ताब्यांत असलेला तूं ह्या संसारांत पुष्कळ दुःखें सोशिलींस; तथापि आज स्वतंत्र होऊन अशुभ कर्माचा अगदीं नाश व्हावा अशी इच्छा करणारा तूं थोडेसें दुःख सोस!

यावद्गृहीतसंन्यासः ।
स्वं ध्यायन् संस्तरे वसेः ॥
तावन्निहन्याः कर्माणि ।
प्रचुराणि क्षणे क्षणे ॥ ९९ ॥

टीका—यावत् यावन्तं कालं, गृहीतसंन्यासः प्रतिपन्नभक्तप्रत्याख्यानस्त्वं स्वमात्मानं ध्यायन्नेकाग्रतया चिन्तयन् संस्तरे प्रस्तरे वसेस्तिष्ठेस्तावत् तावन्तं कालं क्षणे क्षणे प्रचुराणि कर्माणि निहन्या नियतमवश्यं क्षपयेः ॥

अर्थ— जोंपर्यंत संन्यास करून आत्मचिंतन करीत संस्तरावर रहाशील, तोंपर्यंत प्रत्येक क्षणीं पुष्कळ अशुभकर्मांचा नाश करशील!

पुरुप्रायान् बुभुक्षादि- ।
परीषहजये स्मर ॥
घोरोपसर्गसहने ।
शिवभूतिपुरःसरान् ॥ १०० ॥

टीका—किं च बुभुक्षादिपरीषहजये कर्तव्ये स्मर चिन्तय त्वं । कान् पुरुप्रायान् वृषभदेवादीन् । तथा घोरोपसर्गसहने कर्तव्ये शिवभूतिप्रभृतीन् स्मर ॥

अर्थ— क्षुधा, तृषा वगैरे परीषहांना ज्यावेळीं जिंकावयाचें असेल त्यावेळीं श्रीवृषभदेवादिकांचें स्मरण कर; आणि ज्यावेळीं भयंकर उपसर्ग सहन करावयाचे असतील त्यावेळीं शिवभूति वगैरेंचें स्मरण कर.

तृणपूलबृहत्पुञ्जे ।
संक्षोभ्योपरिपातिते ॥
वायुभिः शिवभूतिः स्वं ।
ध्यात्वाऽभूदाशु केवली ॥ १०१ ॥

टीका— अभूत्सम्पन्नः । कोऽसौ शिवभूतिः शिवभूतिसंज्ञो मुनिः । किंविशिष्टः केवली केवलज्ञानी । कथमाशु सद्यः । किं कृत्वा ध्यात्वा प्रणिधाय । कं स्वमात्मानं । क सति तृणपूलबृहत्पुञ्जे लोके गंजी इति प्रसिद्धे । किंविशिष्टे पातिते । कैर्वायुभिः ।

क उपरि उपरिष्टात् । किं कृत्वा संक्षोभ्य समन्तादितस्ततः क्षोभयित्वा संचाल्य । अचेतनकृतोपसर्गसहने दृष्टान्तः ॥

**अर्थ—गवताची मोठी गंजी वायूनें चोहीकडून हलवून अंगावर पाडिली असतां शिवभूति आत्माचिंतन करून त्याचवेळीं केवली मुनि झाला. [हें अचेतनानें केलेल्या उपसर्गाचें सहन केल्याबद्दलचें उदाहरण दिलें.]**

**न्यस्य भूषाधियाऽङ्गेषु ।**
**सन्तप्ता लोहशृङ्खलाः ॥**
**द्विट्पक्ष्यैः कीलितपदाः ।**
**सिद्धा ध्यानेन पाण्डवाः ॥ १०२ ॥**

**टीका—** सिद्धाः परममुक्तिं गताः । के ते पाण्डवाः साक्षाद्युधिष्ठिरभीमसेनार्जुनाख्यः सिद्धाः । नकुलसहदेवौ त्वसाक्षात् सर्वार्थसिध्यादिजन्मना व्यवधानात् । केन ध्यानेन शुद्धस्वात्मप्रसंख्यानेन । किंविशिष्टाः संतः कीलितपदाः लोहकीलकैर्भूम्या सह यंत्रितपादाः । कैः द्विट्पक्ष्यैः द्विषां कौरवाणां पक्षे भवैः तद्भागिनेयादिभिः । किं कृत्वा न्यस्य निक्षिप्य । काः लोहशृंखलाः । किंविशिष्टाः तप्ताः ज्वलज्ज्वालीकृताः । केषु अङ्गेषु पाण्डवानां कण्ठादिप्रदेशेषु । कया भूषाधिया भूषणकल्पनया । युष्मान् हेमाभरणानीमानि परिदापयाम इति कथयित्वेत्यर्थः । मनुष्यकृतोपसर्गसहनोपाख्यानमिदम् ॥

**अर्थ— शत्रूकडील लोकांनीं 'हे अलंकार आहेत' असें सांगून अंगांत तापलेल्या लोखंडाच्या सांखळ्या अडकवून भूमीबरोबर ज्यांची पावलें मोळे मारून खिळलीं आहेत असे पांडव, आत्मध्यानानें दुःखापासून मुक्त झाले.**

[हें मनुष्यांनीं केलेल्या उपसर्गाचें सहन केल्याबद्दलचें उदाहरण दिलें.]

शिरीषसुकुमाराङ्गः ।
खाद्यमानोऽतिनिर्दयम् ॥
सृगाल्या सुकुमारोऽसून् ।
विससर्ज न सत्पथम् ॥ १०३ ॥

टीका— विससर्ज त्यक्तवान् । कोऽसौ सुकुमारः सुकुमारस्वामी । कान् असून् प्राणान न पुनः सत्पथं शुद्धस्वात्मध्यानरूपं सिध्द्युपायं विससर्ज । किं क्रियमाणः खाद्यमानः भक्ष्यमाणः । कया सृगाल्या जम्बुकस्त्रिया । कथमिति निर्दयं प्रकामनिष्कृपं । किंविशिष्टः सन् शिरीषसुकुमाराङ्गः शिरीषकुसुमसमानकोमलकायः तिर्यक्कृतोपसर्गसहनोदाहरणमिदम् ॥

अर्थ—शिरसाच्या फुलाप्रमाणें ज्याचे अवयव अत्यंत कोमल आहेत असा असून कोल्हिणीनें निर्दयपणानें चावला असलेला अशा सुकुमारस्वामीनें प्राण देखील सोडिले; परंतु, सन्मार्ग सोडिला नाहीं. [हें पशूंनीं केलेल्या उपसर्गाचें सहन केल्याबद्दलचें उदाहरण आहे.]

तीव्रदुःखैरतिक्रुद्ध- ।
भूतारब्धैरितस्ततः ॥
भग्नेषु मुनिषु प्राणा- ।
नौज्झद्विद्युच्चरः स्वयुक् ॥ १०४ ॥

टीका— औज्झत्त्यजाति स्म । कोऽसौ विद्युच्चरः । कान् प्राणान् । किंविशिष्टः सन् स्वयुक् आत्मानं समादधानः । केषु सत्सु मुनिषु तपोधनेषु । किंविशिष्टेषु भग्नेषु प्रपलायितेषु । क

इतस्ततः यत्र तत्र । कैः तीव्रदुःखैः नितान्तासह्यबाधाभिः । किंविशिष्टैरतिक्रुद्धभूतारब्धैः अत्यन्तकुपिताधमव्यन्तरोपक्रान्तैः । सुरकृतोपसर्गसहने निदर्शनमिदम् ॥

अर्थ— अतिशय रागावलेल्या नीचव्यंतरांनीं दिलेल्या भयंकर दुःखांच्या योगानें सर्व मुनि वाटेल तिकडे पळून गेले असतां विद्युच्चर हा स्वस्वरूपीं लीन होऊन प्राण सोडिता झाला (समाधीनें मेला.) देवांनीं केलेल्या उपसर्गाचें सहन केल्याबद्दलचें हें उदाहरण आहे.

अचेन्नृतिर्यग्देवोप- ।
सृष्टासंक्लिष्टमानसाः ॥
सुसत्त्वा बहवोऽन्येऽपि ।
किल स्वार्थमसाधयन् ॥ १०५ ॥

टीका— किल आगमे ह्येवं श्रूयते । सुसत्त्वा महासात्त्विका अन्येऽपि शिवभूत्यादिभ्योऽपरेऽपि, बहवो भूयांसः, स्वार्थं पुरुषार्थं प्रकरणान्मोक्षलक्षणमसाधयन् निष्पादितवन्तः । कथम्भूता भूत्वा अचेदित्यादि अचेतोऽचेतनाः पृथिव्यादयः, नरो मनुष्याः तिर्यञ्चो तैर्यग्योना देवाः सुराः अचेतश्च नरश्च तिर्यञ्चश्च देवाश्च अचेन्नृतिर्यग्देवास्तैरुपसृष्टाः कृतोपसर्गास्ते च ते असंक्लिष्टमानसाश्च रागद्वेषमोहानाविष्टचेतसः शुद्धस्वात्मध्यानपरिणताः अचेन्नृतिर्यग्देवोपसृष्टासंक्लिष्टमानसाः ॥

अर्थ— अचेतन पदार्थ, मनुष्यें, पशु आणि देव ह्यांनीं ज्यांना उपसर्ग दिले आहेत असे आणि त्यामुळें ज्यांच्या अंतःकरणास मुळींच क्लेश झाले नाहींत असे धैर्यशाली अनेक पुरुष, स्वार्थ साधिते झाले. ह्मणजे मुक्त झाले. अशा कथा शास्त्रांत पुष्कळ सांगितल्या आहेत.

तत्त्वमप्यङ्ग सङ्गत्य ।
निःसङ्गेन निजात्मना ॥
त्यजाङ्गमन्यथा भूरि- ।
भवक्लेशैर्ग्लपिष्यसे ॥ १०६ ॥

टीका—अंग अहो महात्मन् । यत एवं महानुभावैर्मुमुक्षुभिर्भगवच्छिवभूतिप्रभृतिभिः अत्यन्तविनिपातोपनिपातेऽपि स्वार्थः साधितस्तत्तस्मात्त्वमपि भवानपि त्यज मुञ्च । किं तदङ्गं देहं । किं कृत्वा सङ्गत्य संयुज्य । केन सह निजात्मना आत्मीयेन तेन वा चिद्रूपेण । किंविशिष्टेन निःसङ्गेन कर्मविविक्तेन । अन्यथा अन्येन संक्लेशावेशप्रकारेण अङ्गत्यागे ग्लपिष्यसे विक्लवीकरिष्यसे त्वं । कैः कतृभिर्भूरिभवक्लेशैः प्रचुरसंसारदुःखैः । उक्तंच— विराद्धे मरणे देव दुर्गतिर्दूरचोदिता । अनन्तश्चापि संसारः पुनरप्यागमिष्यति ॥ १ ॥

अर्थ— ह्मणून हे उपासका! तूं देखील निःसंग अशा आत्मस्वरूपाशीं ऐक्य पावून हा देह सोड! नाहींपेक्षां तूं अनेक संसारदुःखांच्या योगानें अगदीं थकून जाशील!!!

श्रद्धा स्वात्मैव शुद्धः प्रमदवपुरुपादेय
इत्याञ्जसी दृक् । तस्यैव स्वानुभूत्या
पृथगनुभवनं विग्रहादेश्च संवित् ॥ तत्रैवात्य-
न्ततृप्त्या मनसि । लयमितेऽवस्थितिः स्वस्य
चर्या । स्वात्मानं भेदरत्नत्रयपरपरमं तन्मयं
विद्धि शुद्धम् ॥ १०७ ॥

**टीका**— किं च उपदिश्यते सद्गुरुभिरसौ । दृक् दृष्टिः । किंविशिष्टा आंजसी पारमार्थिकी । किं श्रद्धा अभिनिवेशः । कथं भवति कोऽसौ स्वात्मैव न परात्मा । किंविशिष्टः शुद्धो द्रव्यभावकर्मरहितः । पुनः किंविशिष्टः प्रमदवपुरानन्दरूपः । किंविशिष्टो भवत्युपादेयो मुमुक्षूणामुपेयः । इत्येवंरूपा श्रद्धैव निश्चयसम्यक्त्वमाख्यायते । तथा संविदांजसी निश्चयज्ञानं सद्गुरुभिरुपदिश्यते । किमनुभवनमनुभूतिः । कस्य तस्यैव शुद्धप्रमदवपुस्त्वेनोपादीयमानस्य स्वात्मन एव । कथं पृथक् भेदेन । कस्माद्विग्रहादेः कायवाङ्मनस्त्रयात् । कया स्वानुभूत्या स्वसंवित्या । तथा सद्गुरुभिराञ्जसी चर्या निश्चयचारित्रं चोपदिश्यते । किमवस्थितिरवस्थानं । कस्य स्वस्यात्मनः । क्व तत्रैव तथाप्रतीयमानेऽनुभूयमाने स्वात्मन्येव । क्व सति मनस्यन्तःकरणे किंविशिष्टे इते गते प्राप्ते । कं लयं तन्मयीभावं । क्व तत्रैव । कया अत्यन्ततृष्या अतिमात्रवैतृष्ण्येन । उक्तं च— दर्शनमात्मविनिश्चितिरात्मपरिज्ञानमिष्यते बोधः ॥ स्थितिरात्मनि चारित्रं कुत एतेभ्यो भवति बन्धः ॥१॥ तन्मयं तेन निश्चयरत्नत्रयेण निर्वृतं तदात्माकं स्वात्मानं, परमं शुद्धं परमप्रकर्षशुद्धिप्राप्तं । हे भेदरत्नत्रयपर व्यवहाररत्नत्रयप्रधान आराधकोत्तम विद्धि जानीहि संवेदय स्वं ॥

**अर्थ**— आपला शुद्ध आत्मा हाच आनंदमय आणि मुक्ति होण्याची इच्छा करणाऱ्यांनीं संपाद्य असा आहे अशा प्रकारची जी श्रद्धा (निश्चयाची भक्ति) तेंच सम्यग्दर्शन होय. आणि त्या आत्म्यालाच स्वानुभवानें देहादिकांहून भिन्नपणानें जाणणें हेंच सम्यग्ज्ञान होय. तसेंच त्या आत्म्याच्या ठिकाणीं अत्यंत वैराग्यानें अंतःकरण

एकीभावाला पावलें असतां जी स्थिति तेंच सम्यक्चारित्र होय. ह्मणून हे व्यवहाररत्नत्रयास मुख्य मानणाऱ्या आराधका! तूं आपल्या आत्म्यास वर दाखविलेल्या स्वरूपाचा ह्मणून शुद्ध व उत्कृष्ट असा समज!!!

मुहुरिच्छामणुशोऽपि ।
प्रणिहत्य श्रुतपरां श्रुतद्रव्ये ॥
स्वात्मनि यदि निर्विघ्नं ।
प्रतपसि तदासि ध्रुवं तपसि ॥ १०८ ॥

टीका— तथा यदि चेत् प्रतपसि दीप्यसे त्वं । क्व स्वात्मनि कथं निर्विघ्नं निष्प्रत्यूहं । किं कृत्वा प्रणिहत्य प्रकर्षेण नियतं हत्वा । कां इच्छां कांक्षां । क्व परद्रव्ये पुद्गलादौ । किंविशिष्टा-मणुशोऽपि स्वल्पामपि । किंविशिष्टः सन् मुहुरसकृत् श्रुतपरः श्रुतज्ञानभावनापरिणतो भवन्नित्यर्थः । तदा ध्रुवं निश्चितं तपसि अव्याहतं स्फुरसि त्वं । क्व तपसि तपःसञ्ज्ञे साक्षान्मोक्षोपाये । आभ्यां निश्चयाराधनाचातुर्विध्यमुपदिष्टं प्रतिपत्तव्यं ॥

अर्थ— ह्मणून हे आराधका! तूं श्रुतज्ञानावर निष्ठा ठेऊन आत्म्याहून निराळ्या अशा पुद्गलाविषयीं वरचेवर थोडी इच्छा कमी करून स्वरूपाच्या ठिकाणीं जर चमकूं लागशील (स्वरूपाचें तादात्म्य पावशील) तर, तपश्चर्या-रूपी मोक्षसाधनांत तूं गढलेला आहेस असा होशील.

इदानीं व्यवहारेतराराधनासाध्यमानपरमानन्दलाभाविष्करणलक्षणे-नाशीर्वाददानेन क्षपकं निर्यापकाचार्यः प्रोल्लासयन्नाह—

आतां क्षपकास उत्साहित करणारा निर्यापकाचार्यांचा आशीर्वाद सांगतात.

नैराश्यारब्धनैःसंग्य- ।
सिद्धसाम्यपरिग्रहः ॥
निरुपाधिसमाधिस्थः ।
पिबानन्दसुधारसम् ॥ १०९ ॥

टीका—भोः सुविहित शिरोरत्न । पिब उपयुंक्ष त्वं । कमानन्दसुधारसं प्रमोदपीयूषनिर्यासं । किंविशिष्टः सन् निरुपाधिसमाधिस्थः निरुपाधिर्निर्विशेषो ध्यातृध्यानध्येयविकल्पशून्यः समाधिर्योगो निरुपाधिसमाधिस्तत्र स्थितः । कथम्भूतो भूत्वा नैराश्येत्यादि नैराश्येन जीवितधनाद्याकांक्षानिग्रहेणारब्धमुपक्रान्तं नैस्संग्यं बहिरङ्गान्तरङ्गपरिग्रहनिष्क्रान्तत्वं तेन सिद्धो निष्पन्नः साम्यपरिग्रहः परमसामायिकस्वीकारो यस्य स तथोक्तः ॥

अर्थ—हे श्रावका! निरिच्छतेनें उत्पन्न झालेल्या निःसंगपणामुळें ज्याचा समतेचा स्वीकार फलित झाला आहे असा तूं, निर्विकल्पसमाधींत असलेला असा होत्साता आनंदरूपी अमृताच्या रसाचें पान कर!

साम्प्रतमध्यायार्थमशेषमुपसंगृह्णन्नाराधकस्याराधनासहितमरणफलविशेषमुपदिशति

आतां ह्या अध्यायांतील विषयांचा संक्षेपानें संग्रह करून आराधकाला आराधनायुक्त मरण आलें असतां विशेषफल काय मिळतें तें सांगतात.

सांलिख्येति वपुः कषायवदलङ्कर्मीणनिर्यापक- । न्यस्तात्मा श्रमणस्तदेव कलयंल्लिंगं तदीयं परः ॥ सद्रत्नत्रयभावनापरिणतः

प्राणान् शिवाशाधर- । स्त्यक्त्वा पञ्चनम-
स्क्रियास्मृति शिवी स्यादष्टजन्मान्तरे ॥११०॥

टीका—शिवीस्यादशिवः शिवः सम्पद्यते परममुक्तो भवेदित्यर्थः । कोऽसौ शिवाशाधरः मोक्षायाभिलाषभृन्मुमुक्षुरित्यर्थः । किं कृत्वा त्यक्त्वा । कान् प्राणान् । किंविशिष्टः सन् सादित्यादि सत्या यथागुणस्थानं सम्भवन्त्या रत्नत्रयभावनया निश्चयरत्नत्रयाभ्यासेन परिणतो योगी चरमसमयवर्ती समुच्छिन्नक्रियाप्रतिपातिशुक्लध्यानारूढः । किं कुर्वन् कलयन् धारयन् । किं तल्लिङ्गं जिनरूपतां । किं तदेव पूर्वगृहीतमौत्सर्गिकमेव । किमाख्योऽसौ श्रवणः श्रवण इति व्यपदेशभाक् कथंभूतो भूत्वा अलंकर्मीणानिर्यापकन्यस्तात्मा कर्मणे प्रकृतत्वात्संसारार्णवनिस्तारणलक्षणाय अलं समर्थोऽलंकर्मीणः निर्यापको व्यवहारेण सुस्थिताचार्यो निश्चयेन तु शुद्धस्वात्मानुभूतिपरिणामोन्मुख आत्मैव तस्यैव दुःखादुःखहेतोर्वा आत्मनो निष्कासकत्वोपपत्तेः । यदाह— स्वस्मिन्सदभिलाषित्वादभीष्टज्ञापकत्वतः । स्वयं हितप्रयोक्तृत्वादात्मैव गुरुरात्मनः ॥ १ ॥ अलंकर्मीणश्चासौ निर्यापकश्च अलंकर्मीणनिर्यापकस्तत्र न्यस्तो निक्षिप्तः समर्पित आत्मा येन स तथोक्तः । किं कृत्वा संलिख्य सम्यक्कृशीकृत्य किं तद्वपुः शरीरं किंवत् कषायवत् कषायान् शरीरं च बाह्यांभ्यंतरतपोभिस्तनूकृत्य कथमित्येवमुक्तप्रकारेण तदुत्कृष्टाराधनापक्षे व्याख्यानं ॥ मध्यमाराधनापक्षे संप्रति व्याख्यायते—श्रमणोऽनगारः शिवाशाधरो मुमुक्षुः सन् तदेव लिङ्गमाचेलक्यादिचतुर्विकल्पं कलयन् सत्यां समीचीनायां संवरसहभाविपापकर्मनिर्जरासमर्थायां रत्नत्रयभावनायां सम्यग्दर्शनादिरत्नत्रयाभ्यासे परिणत उपयुक्तः सन् प्राणाँस्त्यक्त्वा शिवीस्यात् शिवमैन्द्रादिपदप्राप्तिलक्षणोऽभ्युदयः । शिवमस्यास्तीति शिवो अर्श आदेरित्यनेन

मत्त्वर्थीयो अः प्रत्ययः । शेषं पूर्ववद्याख्येयं ॥ ऐदंयुगीनापेक्षया जघन्याराधनापक्षे तदेवेत्थं व्याख्येयं— श्रमणः प्राग्व्याख्यातार्थ-विशेषणविशिष्टः पंचनमस्क्रियायां पंचनमस्कारे स्मृतिः चिंता उच्चारणं यत्र तत्पंचनमस्क्रियास्मृति यथा भवत्येवं प्राणाँस्त्यक्त्वा शिवी स्यात् क्व अष्टजन्मांतरे अष्टानां भवानां मध्ये उत्कृष्टमध्यम-जघन्याराधनानुभवादत्र विभागः कर्तव्यः । तथा ह्यागमः । कालाइं अहिऊण च्छित्तूणं अट्ठकम्मसंखलयम् ॥ केवळणाणपहाणा केई सिज्झंति तंमि भवे ॥ १ ॥ आराहिऊण केई चउव्विहाराहणा यि जं सारं । उव्वरियसेसपुंणो सव्वट्ठणिवासिणो होंति ॥ २ ॥ जेसिं होज्ज जहंणा चउव्विहाराहणा हु भवियाणं । सत्तट्ठभवे गंतुं ते च्चिय पावंति णिव्वाणं ॥ ३ ॥ अपि च— येऽपि जघन्या तेजो-लेश्यामाराधनामुपनयंति । तेऽपि च सौधर्मादिषु भवंति देवाः सुकल्पस्थाः ॥ १ ॥ अथवा— ध्यानाभ्यासप्रकर्षेण त्रुट्यन्मोहस्य योगिनः । चरमांगस्य मुक्तिः स्यात्तदैवान्यस्य च क्रमात् ॥ १ ॥ तथाह्यचरमांगस्य ध्यानमभ्यस्यतः सदा । निर्जरा संवरश्च स्यात्स-कलाशुभकर्मणां ॥ २ ॥ आस्रवंति च पुण्यानि प्रचुराणि प्रतिक्षणं । यैर्महर्द्धिर्भवत्येष त्रिदशः कल्पवासिषु ॥ ३ ॥ तत्र सर्वेन्द्रियाह्लादि मनसः प्रीणनं परं । सुखामृतं पिबन्नास्ते सुचिरं सुरसेवितः ॥ ४ ॥ ततोऽवतीर्य मर्त्येऽपि चक्रवर्त्यादिसंपदः । चिरं भुक्त्वा स्वयं मुक्त्वा दीक्षां दैगंबरीं श्रितः ॥ ५ ॥ वज्रकायः स हि ध्यात्वा शुक्ल ध्यानं चतुर्विधं । विधूयाष्ट च कर्माणि श्रयते मोक्षसंपदम् ॥ ६ ॥ तदेतच्छ्रमणधर्मधारिणः प्रति फलमुपादिष्टं तदितरान् प्रति पुनरिद-मुपदिश्यते । तदीयं पर इत्यस्य व्याख्यानेन— परः श्रावकोऽन्यो वा सद्दृष्टिस्तदीयं श्रमणसंबंधि लिंगं कलयन् पंचनमस्क्रियास्मृतिः प्राणाँस्त्यक्त्वा शिवीस्यादिति संबंधः । शेषं पूर्ववत् यथास्वं

विकल्प्य व्याख्येयं ॥ यत् स्वामी– खरपानहापनामपि कृत्वा कृत्वोपवासमपि शक्त्या । पंचनमस्कारमनास्तनुं त्यजेत्सर्वयत्नेन ॥ इति भद्रम् ॥ ७ ॥

अर्थ— ह्याप्रमाणें क्रोधादिकषयाप्रमाणेंच आपलें शरीर कृश करून, संसारांतून नेण्यास समर्थ अशा निर्यापकाचार्याच्या स्वाधीन वागणारा व पूर्वींचेंच लिंग (दिगंबरता) धारण करणारा व उत्कृष्ट अशा रत्नत्रयाच्या अभ्यासानें शेवटच्या मर्यादेला प्राप्त झालेला (शुक्लध्यानांत गढलेला) असा व मुक्त होण्याची इच्छा धारण करणारा असा श्रमण, प्राणांचा त्याग करून पंचनमस्कारांचें स्मरण करीत आठ जन्मांच्या आंत परममुक्तीला पावतो. हा अर्थ उत्कृष्टश्रावकपक्षीं झाला. मध्यमश्रावकपक्षीं ह्या श्लोकांतील ‘सद्रत्नत्रयभावनापरिणतः शिवी स्यात्’ ह्या पदांचा अर्थ ‘चांगलें ह्मणजे संवरांशीं सहवर्तमान असलेल्या पापकर्माच्या निर्जरेविषयीं समर्थ असें जें रत्नत्रय त्याच्या अभ्यासांत गढून गेलेला असा होतसाता इंद्रादिपदांची प्राप्तिरूपी जो अभ्युदय त्यानें युक्त होतो’ असा करावा. बाकीच्या पदांचा अर्थ दोनीकडे सारखा आहे. आणि जघन्याराधनापक्षीं वरील दोनी पदांचा अर्थ वर दाखविल्याप्रमाणेंच करावा. बाकीच्या सर्वपदांचा अर्थ पूर्वीं सांगितल्याप्रमाणेंच समजावा.

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतसागारधर्मटीकायां
भव्यकुमुदचान्द्रिकासञ्ज्ञायामादितः सप्तदशः
प्रक्रमाचाष्टमोऽध्यायः

**अध्याय आठवा समाप्त.**

---

## ॥ ग्रन्थकर्तुः प्रशस्तिः ॥

आतां आशाधरपंडितांचें माहात्म्यवर्णन करितात.

श्रीमानस्ति सपादलक्षविषयः शाकंभरीभूषण- ।
स्तत्र श्रीरतिधाम मण्डलकरं नामास्ति दुर्गं महत् ॥
श्रीरत्न्यामुदपादि तत्र विमलव्याघ्रेरवालान्वया- ।
च्छ्रीसल्लक्षणतो जिनेन्द्रसमयश्रद्धालुराशाधरः ॥ १ ॥

श्रीमान् त्रिवर्गसंपत्तियुक्तः । शाकंभरी लवणाकरविशेषः । श्रीरतिधाम लक्ष्मीक्रीडागृहं श्रीरत्न्यां रत्नीति कविमातुः संज्ञा उदपादि उत्पन्नः ॥

अर्थ— क्षत्रिय, ब्राह्मण आणि वैश्य ह्या तिन्ही वर्णांचे लोक ज्यांत विपुल आहेत असा व 'शाकंभरी' नांवाचा जो समुद्रकिनारा त्यास शोभा आणणारा असा 'सपाद-लक्ष' नांवाचा देश आहे. त्या देशांत लक्ष्मीचें क्रीडा-मंदिरच कीं काय! अशा 'मंडलकर, नांवाच्या किल्ल्यांत निर्दोष असा 'व्याघ्रेरवाल' नांवाच्या वंशांत श्री-जिनेंद्राच्या सिद्धांताविषयीं श्रद्धालु असा 'आशाधर' पंडित, श्रीरत्नी देवीच्या ठिकाणीं उत्पन्न झाला.

सरस्वत्यामिवात्मानं ।
सरस्वत्यामजीजनत् ॥
यः पुत्रं छाहडं गुण्यं ।
रञ्जितार्जुनभूपतिम् ॥ २ ॥

सरस्वत्यां वाग्देवतायां। सरस्वत्यां सरस्वतीसंज्ञायां स्वभार्यायां। गुण्यं गुणातिशययुक्तं। अर्जुनभूपतिं अर्जुनदेवो नाम मालवाधिपतिं॥

अर्थ— जो आशाधर पंडित, ज्याप्रमाणें वाग्देवता जी सरस्वती तिच्या ठिकाणीं आपल्यास उत्पन्न करिता झाला (हा फारच विद्वान् असल्यानें सरस्वतीचा मानसपुत्रच आहे कीं काय! असें लोकांस वाटत होतें.) त्याप्रमाणें गुणवान् व मालवदेशाचा स्वामी जो अर्जुनभूपति त्याचा ज्यानें संतोष केला आहे अशा 'छाहडल' नांवाच्या पुत्रास 'सरस्वती' नांवाच्या आपल्या पत्नीचे ठिकाणीं उत्पन्न करिता झाला.

व्याघ्रेरवालवरवंशसरोजहंसः।
काव्यामृतौघरसपानसुतृप्तगात्रः॥
सल्लक्षणस्य तनयो नयविश्वचक्षु-।
राशाधरो विजयतां कलिकालिदासः॥ ३॥

इत्युदयसेनमुनिना।
कविसुहृदा योऽभिनन्दितः प्रीत्या॥
प्रज्ञापुञ्जोऽसीति च।
योऽभिमतो मदनकीर्तियतिपतिना॥ ४॥

(युग्मम्)

अर्थ— "व्याघ्रेरवाल नांवाच्या उत्तमवंशरूपी कमलावरील राजहंसच कीं काय! असा आणि ज्याचे सर्व अवयव काव्यरूपी अमृतप्रवाहाच्या रसपानानें तुष्ट झाले

आर्हत असा सल्लक्षण नांवाच्या श्रावकाचा पुत्र आणि व्यवहारादिनय हेंच ज्याचें नेत्र ( सर्वप्रकारच्या ज्ञानाचें साधन ) आहे असा व ह्या कालांतील कालिदासच कीं काय! असा श्री आशाधर, उत्कर्ष पावो" असें सर्व कवींवर प्रेम करणाऱ्या उदयसेनमुनीनें प्रेमानें त्याचें वर्णन केलें; व मदनकीर्ति नांवाच्या यतिपतीनें 'तूं बुद्धीचा पुंज आहेस' असें ह्मणून ज्याचा सत्कार केला असा हा आशाधर पंडित होता.

म्लेच्छेशेन सपादलक्षविषये व्याप्ते सुवृत्त-
क्षति-।त्रासाद्विन्ध्यनरेन्द्रदोःपरिमलस्फूर्जत्त्रि-
वर्गौजसि ॥ प्राप्तो मालवमण्डले बहुपरी-
वारः पुरीमावसन् । यो धारामपठज्जिनप्रमि-
तिवाक्शास्त्रे महावीरतः ॥ ५ ॥

म्लेच्छेशेन साहिवंदीणतुरुष्कराजेन । सुवृत्तक्षतिः सदाचारनाशः । दोःपरिमलः परिमलो लक्षणावृत्त्या बलं बाहुबलातिशय इत्यर्थः । ओजः उत्साहोऽन्तःसारो वा । जिनप्रमितिवाक्शास्त्रे जैनेंद्र-प्रमाणशास्त्रं जैनेंद्रव्याकरणं च । महावीरतः वादिराजपण्डितश्री-मद्धरसेनशिष्यात्पण्डितमहावीरात् ॥

अर्थ—तो सपादलक्ष ( सवालाख ) नांवाचा देश यवनराजानें आपल्या ताब्यांत घेतला असतां सदाचाराला अडचणी येऊं लागल्यामुळें झालेल्या त्रासानें, विंध्यापर्वतावरील भूपतीच्या बाहुबलानें ज्यांतील क्षात्रिय, ब्राह्मण व वैश्य ह्या त्रिवर्गाचा उत्साह स्फुरण पावत आहे अशा मालवदेशांत येऊन पुष्कळ परिवारांसह धारा नांवाच्या

नगरींत जो रहाता झाला; आणि कविराज जो श्रीहरसेन त्याचा शिष्य जो पंडितमहाबीर त्याच्या जवळ जैनेंद्रव्याकरण पठता झाला.

आशाधारत्वं मयि विद्धि सिद्धं ।
निसर्गसौन्दर्यमजर्यमार्य ॥
सरस्वतीपुत्रतया यदेत- ।
दर्थे परं वाच्यमयः प्रपञ्चः ॥ ६ ॥

अजर्यं मैत्रीं सरस्वतीपुत्रतया निसर्गसौंदर्यं प्रकृत्या सहोदरत्वं॥

अर्थ—हे आर्या; तूं ज्याप्रमाणें सरस्वती देवीचा मानसपुत्र आहेस त्याप्रमाणें मीहि सरस्वतीचा ( आईचें नांव ) पुत्र असल्यानें हा आशाधरपणा माझ्या ठिकाणीं सिद्ध असून तो स्वभावासिद्ध अशा बंधूप्रमाणें आहे. इतकेंच नव्हे तर, माझ्या ठिकाणीं असलेल्या आशाधरपणांत केव्हांहि न्यूनता आणतां येणार नाहीं; असा तो आहे. पण त्याच्या अर्थांत मात्र मोठाच फरक आहे. आणि तो अगदीं निंद्य आहे. तो असा—तूं आशाधर आहेस ह्मणजे आशेला ताब्यांत ठेवणारा आहेस आणि तो आशाधर ह्मणजे लोभी आहे.

इत्युपश्लोकितो विद्व- ।
द्बिल्हणेन कवीशिना ॥
श्रीविन्ध्यभूपतिमहा- ।
सन्धिविग्रहिकेण यः ॥ ७ ॥

इति उपश्लोकितः श्लोकेनोपस्तुतः । श्रीविंध्यभूपतिः विजयवर्मा नाम मगधाधिपतिः ॥

अर्थ—ह्याप्रमाणें सर्व कवींमध्यें श्रेष्ठ व विंध्यपर्वताचा राजा जो विजयवर्मा त्याचा शत्रूंशीं तह करणें किंवा युद्ध करणें ह्याविषयींचा उत्कृष्ट मसलतगार ( महामात्य ) अशा पंडित श्रीबिल्हणानें ज्याची स्तुति केली आहे असा

श्रीमदर्जुनभूपाल- ।
राज्ये श्रावकसंकुले ॥
जिनधर्मोदयार्थं यो ।
नलकच्छपुरेऽवसत ॥ ८ ॥

अर्थ—जो महापंडित, जिनधर्मावर श्रद्धा ठेवणाऱ्या अशा श्रावकांनीं गजबजलेल्या अशा श्रीमान् अर्जुनभूपतीच्या राज्यांत जिनधर्माचा उत्कर्ष करण्याकारितां नलकच्छपुरांत रहाता झाला.

यो द्राग्व्याकरणाब्धिपारमनयच्छुश्रुषमाणान्न कान् । सत्तर्के परमास्त्रमाप्य न यतः प्रत्यर्थिनः केऽक्षिपन् ॥ चेरुः केऽस्खलितं न येन जिनवाग्दीपं पथि ग्राहिताः । पीत्वा काव्यसुधां यतश्च रसिकेष्वायुःप्रतिष्ठां न के ॥ ९ ॥

कान् पंडितदेवचंद्रादीन् प्रत्यार्थिनः प्रतिवादिनः के वादींद्रविशालकीर्त्यादयः अक्षिपन् जयंति स्म । चेरुः प्रवृत्ताः के भट्टारकदेवविनयभद्रादयः । अस्खलितं निरतिचारं । जिनवाक् अर्हत्प्रवचनं ।

पथि मोक्षमार्गे आहिताः स्वीकारिताः। रसिकेषु सहृदयविदग्धेषु मध्ये। आपु: प्राप्ताः। के बालसरस्वतीमहाकविमदनादयः॥

अर्थ—जो पंडित, आपली सेवा करणाऱ्या कोणत्या शिष्यांना व्याकरणशास्त्ररूपी समुद्राच्या परतीरास अल्पकालांत नेता झाला नाहीं! ज्याच्यापासून तर्कशास्त्रांत उत्कृष्टज्ञानरूपी शास्त्र मिळवून कोणीं बरें दुसऱ्या वादी लोकांचा तिरस्कार केला नाहीं! ज्या पंडितानें श्रीजिनांची वाणीरूपी दिवटी ज्यांच्या हातांत दिली आहे (जैनसिध्दांतांचें ज्ञान ज्यांना करून दिलें आहे) असे कोणते श्रावक, न अडखळतां मोक्षमार्गांत संचार करते झाले नाहींत? आणि ज्याच्यापासून काव्यामृत प्राशन करून रसिकांपैकीं कोण बरें आपल्या आयुष्याला महत्व संपादन करतां झाला नाहीं?

स्याद्वादविद्याविशदप्रसादः।
प्रमेयरत्नाकरनामधेयः॥
तर्कप्रबन्धो निरवद्यविद्या-।
पीयूषपूरो वहति स्म यस्मात्॥ १०॥

अर्थ—स्याद्वादाचें म्हणजे अनेकांतवादाचें ज्ञान भरलेलें असल्यामुळें ज्याचा प्रसाद गुण स्पष्ट भासत आहे असा प्रमेयरत्नाकर नांवाचा तर्कग्रंथ निर्दोष अशा विद्यारूपी अमृताचा पूरच कीं काय असा होत्साता— ज्याच्यापासून निर्माण झाला.

सिध्यङ्कं भरतेश्वराभ्युदयसत्काव्यं निबन्धोज्वलं।

यस्त्रैविद्यकवीन्द्रमोहनमयं स्वश्रेयसेऽरीरचत् ॥
योऽर्हद्वाक्यरसं निबन्धरुचिरं शास्त्रं च धर्मामृतं ।
निर्माय न्यदधान्मुमुक्षुविदुषामानन्दसान्द्रे हृदि ११

सिध्द्यंकं सिद्धिः सिद्धिशब्दोऽकश्चिन्हं सर्गप्रातवृत्तेषु यस्य तत् । निबंधोज्वलं स्वयंकृतनिबंधनेन स्फुटप्रतिभासं । अरीरचत् रचयाति स्म । अर्हद्वाक्यरसं जिनागमनिर्यासभूतं निबंधरुचिरं । स्वयंकृतज्ञानदीपिकाख्यपंजिकया रमणीयं धर्मामृतं धर्मामृताख्यं न्यदधात् स्थापयति स ॥

अर्थ— जो महाकवि ज्याच्या प्रत्येक सर्गाच्या शेवटीं असलेल्या पद्यांत 'सिद्धि' असा शब्द आहे असें व विद्वान् आणि श्रेष्ठ कवि ह्यांना मोह करणारें असें व स्वतः केलेल्या टीकेमुळें स्पष्ट समजण्यासारखें भरताभ्युदय नांवाचें उत्तम काव्य स्वतःच्या कल्याणाकारितां रचता झाला आणि भगवान् अरहंताच्या वाक्यांतील प्रेम ज्यांत भरलेलें आहे व जें स्वतःच केलेल्या टीकेमुळें मनोरम झालें आहे असें धर्मामृत नांवाचें शास्त्र रचून मोक्षेच्छु अशा विद्वानांच्या आनंदपूर्ण अशा हृदयांत ठेविता झाला. तात्पर्य—मुमुक्षु जीव ज्याचा निरंतर अभ्यास करतात असें हें धर्मामृत नांवाचें शास्त्र ज्यानें रचलें.

आयुर्वेदविदामिष्टां ।
व्यंक्तं वाग्भटसंहिताम् ॥
अष्टाङ्गहृदयोद्योतं ।
निबन्धमसृजच्च यः ॥ १२ ॥

व्यक्तुं प्रकटीकर्तुं । वाग्भटसंहितां अष्टांगहृदयनाम्नीं ॥

अर्थ— आयुर्वेद जाणणाऱ्या पंडितांना ( वैद्यांना ) अत्यंतप्रिय अशी जी वाग्भटसंहिता ( सुप्रसिद्ध वाग्भट नांवाचा ग्रंथ ) त्यावर विद्यार्थ्यांना स्पष्ट समजण्याकारितां अष्टांगहृदयोद्योत नांवाच्या टीकेची जो रचना करता झाला.

यो मूलाराधनेष्टोप- ।
देशादिषु निबन्धनम् ॥
व्यधत्तामरकोशे च ।
क्रियाकलापमुज्जगौ ॥ १३ ॥

आदिः आराधनासारभूपालचतुर्विंशतिस्तवनाद्यर्थः । उज्जगौ उत्कृष्टं कृतवान् ॥

अर्थ— आणि जो मूलाराधना, इष्टोपदेश वगैरे विषयांवर ग्रंथरचना करता झाला; आणि अमरकोशावर क्रियाकलाप नांवाची टीका ज्यानें केली.

रौद्रटस्य व्यधात्काव्या- ।
लङ्कारस्य निबन्धनम् ॥
सहस्रनामस्तवनं ।
सनिबन्धं च योऽर्हताम् ॥ १४ ॥

रौद्रटस्य रुद्राचार्यकृतस्य । अर्हतां अनंतजिनानां ॥

अर्थ— रुद्रटानें केलेल्या काव्यालंकार नामक ग्रंथावर ज्यानें टीका केली; आणि जो भगवान् अरहंतांचें सहस्रनाम स्तोत्र व्याख्येसह करता झाला.

सनिबन्धं यश्च जिन- ।
यज्ञकल्पमरीरचत् ॥
त्रिषष्ठिस्मृतिशास्त्रं यो ।
निबन्धालङ्कृतं व्यधात् ॥ १५ ॥

सनिबन्धं स्वयंकृतेन जिनयज्ञकल्पदीपकारटीन निबन्धेन सहितं जिनयज्ञकल्पं जिनयज्ञकल्पाख्यं जिनप्रतिष्ठाशास्त्रं अरीरचत् निर्मितवान् । त्रिषष्ठिस्मृतिशास्त्रं आर्षमहापुराणशास्त्रोध्दृतत्रिषष्ठिशलाकापुरुषवृत्तगोचरं त्रिषष्ठिस्मृतिसंज्ञं संक्षिप्तशास्त्रं । निबन्धालङ्कृतं स्वयंकृतनिबन्धेन भूषितं ॥

अर्थ—जो जिनयज्ञकल्प नांवाचा ग्रंथ जिनयज्ञकल्पदीपिका नामक टीकेसह रचिता झाला. तसेंच ज्यानें त्रिषष्टिस्मृति नांवाचा त्रेसष्ठ शलाकापुरुषांचा इतिहासग्रंथ सटीक तयार केला.

अर्हन्महाभिषेकार्चा- ।
विधिं मोहतमोरविम् ॥
चक्रे नित्यमहोद्योतं ।
स्नानशास्त्रं जिनेशिनाम् ॥ १६ ॥

नित्यमहोद्योतं नित्यमहोद्योताख्यं ॥

अर्थ—ज्यानें मोहरूपी अंधकाराचा नाश करणारा सूर्यच कीं काय! असा अर्हन्महाभिषेकपूजाविधि नांवाचा ग्रंथ केला. आणि नित्यमहोद्योत, जिनाभिषेकविधि हे ग्रंथहि रचले.

रत्नत्रयविधानस्य ।

पूजामाहात्म्यवर्णनम् ॥

रत्नत्रयविधानाख्यं ।

शास्त्रं वितनुते स्म यः ॥ १७ ॥

अर्थ—रत्नत्रयविधान नांवाचें रत्नत्रयविधानाच्या पूजेचें माहात्म्य ज्यांत वर्णन केलें आहे अशा प्रकारचा ग्रंथ जो कवि रचिता झाला.

सोऽहमाशाधरो रम्या- ।

मेतां टीकां व्यरीरचम् ॥

धर्मामृतोक्तसागार- ।

धर्माष्टाध्यायगोचराम् ॥ १८ ॥

धर्मामृतोक्ताः स्वकृतधर्मामृताख्यशास्त्रे निगदिताः ॥

अर्थ—ह्याप्रमाणें वर ज्याचें स्वरूप कथन केलें आहे असा तो मी आशाधर, स्वतः केलेल्या धर्मामृत नामक ग्रंथांतील सागारांच्या धर्माचें निरूपण करण्याकरितां केलेल्या आठ अध्यायांवर ही रमणीय टीका करता झाला.

प्रमारवंशवार्धीन्दु- ।

देवपालनृपात्मजे ॥

श्रीमज्जैतुगिदेवेऽसि- ।

स्थेम्नाऽवन्तीमवत्यलम् ॥ १९ ॥

असिस्थेम्ना खड्गजलेन अवति रक्षति सति ॥

नलकच्छपुरे श्रीम- ।
नेमिचैत्यालयेऽसिधत् ॥
टीकेयं भव्यकुमुद- ।
चन्द्रिकेत्युदिता बुधैः ॥ २० ॥

असिधत् सिद्धा ॥

अर्थ— प्रमारवंश- ( परमार अथवा पोवार यांचा वंश) स्वरूप जो समुद्र, त्यांतील चंद्रच कीं काय असा जो देवपालभूपति, त्याचा पुत्र श्रीजैतुगिदेव हा आपलया तरवारीच्या स्थिर अशा धारेनें अवंतीनगरीचें ( उज्जयनीचें ) उत्कृष्ट रक्षण करीत असतां नलकच्छपुरांतील श्रीनेमिनाथाच्या मंदिरांत विद्वान् लोक जिला भव्यकुमुदचंद्रिका असें ह्मणतात अशी ही टीका समाप्त झाली.

षण्णवद्व्येकसंख्यान- ।
विक्रमाङ्कसमात्यये ॥
सप्तम्यामसिते पौषे ।
सिद्धेयं नन्दताच्चिरम् ॥ २१ ॥

समाः सवंत्सराः १२९६ वर्षे पौषे सप्तमीदिने शुक्रादिने इत्यर्थः ॥

अर्थ—ही टीका विक्रमसंवत्सर १२९६ ह्या वर्षांतील पौषकृष्णपक्षांतील सप्तमीच्या दिवशीं समाप्त झाली. ही चिरकाल सुखी राहो. ह्मणजे लोकांना चिरकालपर्यंत अत्यंत प्रिय होवो.

श्रीमान् श्रेष्ठिसमुद्धरस्य तनयः श्रीपौरपाटा-

न्वय-। व्योमेन्दुः सुकृतेन नन्दतु महीचन्द्रो
यदभ्यर्थनात् ॥ चक्रे श्रावकधर्मदीपकमिमं
ग्रन्थं बुधाशाधरो। ग्रन्थस्यास्य च लेखतोऽपि
विदधे येनादिमः पुस्तकः ॥ २२ ॥

अलमतिप्रसङ्गेन ॥

अर्थ— ज्याच्या प्रार्थनेमुळें श्रीआशाधरपंडित श्रावकधर्माचा प्रकाशक असा हा ग्रंथ रचिता झाला आणि ज्यानें लिहून ह्या ग्रंथाचें पहिलें पुस्तक तयार केलें, तो श्रीपौरपाट नांवाचा वंशरूपी आकाशांतील चंद्रच कीं काय! असा श्रीसमुद्धरश्रेष्ठीचा पुत्र महीचंद्र श्रेष्ठी पुण्याच्या योगानें चिरकाल आनंदित राहो!

यावत्तिष्ठति शासनं जिनपतेश्छिन्दानमन्तस्तमो।
यावच्चार्कनिशाकरौ प्रकुरुतः पुंसां दृशामुत्सवम् ॥
तावत्तिष्ठतु धर्मसूरिभिरियं व्याख्यायमानाऽनिशं।
भव्यानां पुरतोऽत्र देशविरताचारप्रचारोद्धुरा ॥२३॥

अर्थ— अंतःकरणांतील अज्ञानाचा नाश करणारें असें श्रीजिनेंद्राचें शासन ( शास्त्र ) जोंपर्यंत ह्या भूमीवर राहील, सूर्यचंद्र जोंपर्यंत सर्व लोकांच्या नेत्रांना आनंद देत रहातील, तोंपर्यंत ही धर्मसूरींनीं व्याख्यान केलेली व देशविरत श्रावकांना स्वतःच्या आचाराविषयीं प्रेरणा करण्यास समर्थ अशी श्रीआशाधर पंडिताची प्रशस्ति ह्या जगांत भव्यजीवांच्या अग्रभागीं निरंतर राहो!

## ग्रंथसंख्या.

अनुष्टुप्च्छन्दसां पञ्च- ।
शताग्राणि सतां मता ॥
सहस्राण्यस्य चत्वारि ।
ग्रन्थस्य प्रमितिः किल ॥ २४ ॥

अङ्कातो ग्रन्थप्रमाणं ४,५०० शुभं भवतु लेखकपाठकयोः ॥

ग्रंथाची संख्या अनुष्टुप् छंदाचे चार हजार पांचशेहे ४५०० आहे.

शुभं भवतु मुद्रकपाठकयोः ॥